श्री काशी संस्कृत ग्रन्थमाला २९८

महर्षिवशिष्ठविरचिता

# धनुर्वेदसंहिता

## हिन्दीभाषानुवादसहिता

अनुवादकः सम्पादकश्च

श्री द्वारकाप्रसाद शास्त्री

प्राक्कथनम्

डॉ० चक्रधर बिजल्वानः

चौखम्भा संस्कृत संस्थान

पोस्ट बाक्स नं० ११३९

वाराणसी–२२१००१ (भारत)

॥ श्रीः ॥

# काशी संस्कृत ग्रन्थमाला

२६७

महर्षिवशिष्ठविरचिता

# धनुर्वेदसंहिता

## हिन्दीभाषानुवादसहिता

अनुवादकः सम्पादकश्च

**श्री द्वारकाप्रसाद शास्त्री**

पुस्तकालयाध्यक्षः

अखिलभारतीयसंस्कृतपरिषद्‌ः लक्ष्मणापुरस्थायाः

प्राक्कथनम्

**डॉ० चक्रधर बिजल्वानः**

प्राचार्यः

लखनऊ-केन्द्रीयसंस्कृतविद्यापीठस्य

**चौखम्भा संस्कृत संस्थान**

**भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा प्रचारक**

पो० आ० चौखम्भा, पो० बा० नं० ११३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी ( भारत )

प्रकाशक । चौखम्भा संस्कृत संस्थान, वाराणसो
मुद्रक : श्रीगोकुल मुद्रणालय, वाराणसी
संस्करणम् : प्रथमम्, वि० सं० २०४६
मूल्य : रु० २५-००

उत्तरप्रदेशसंस्कृतअकादम्याः वित्तीयसहायतया प्रकाशितोऽयंग्रन्थः
प्रथमावृत्तिः १९८९
१००० प्रतिरूपाणि
फोन । ६५८८९

अन्य प्राप्तिस्थान
**चौखम्भा विश्वभारती**
पोस्ट बाक्स नं० १०८४
चौक, ( चित्रा सिनेमा के सामने )
वाराणसी-२२१००१ ( भारत )
फोन : ५४७६६

THE

KASHI SANSKRIT SERIES

267

*****

# DHANURVEDA SANHITA

OF

MAHARSHI VASHISTHA

*Edited and Translated into Hindi*

by

SHRI DWARKA PRASAD SHASTRI

*Librarian*

*Akhil Bharatiya Sanskrit Parishad*

*Lucknow*

Foreword by

Dr. CHAKRADHAR BIJALWAN

*Principal*

Kendriya Sanskrit Vidyapeeth, Lucknow

CHAUKHAMBHA SANSKRIT SANSTHAN

*Publishers and Distributors of Oriental Cultural Literature*

P. O. Chaukhambha, Post Box No. 1139

Jadau Bhawan, K. 37/116, Gopal Mandir Lane

VARANASI ( INDIA )

लखनऊविश्वविद्यालयसंस्कृतविभागाध्यक्षेभ्यः

**डा. जगदम्बाप्रसाद सिनहामहाभागेभ्यः**

सादरं समर्प्यते कृतिरियं विनीतेन

**द्वारकाप्रसाद शास्त्रिणा**

# प्राक्कथनम्

**डा० चक्रधर बिजल्वानः**

प्राचार्यः

लखनऊ-केन्द्रीयसंस्कृतविद्यापीठस्य

यजुर्वेदाथर्ववेदसम्मतां सरहस्यां धनुर्विद्यां प्रोवाच परशुरामाय भूतभावनो भगवान् सदाशिवः। प्रोक्ता च सैव कालान्तरे ब्रह्मर्षि-प्रवरेण वशिष्ठेन राजर्षिप्रवराय विश्वामित्राय याथातथ्येनेति नाविदितमस्ति विदितवेदितव्यानां विदुषाम्। शोधाध्येतृभिरविरतं विजिज्ञासितायास्तस्या एव वशिष्ठविरचिताया धनुर्वेदसंहिताया परम्परया प्राप्तैका मातृका संपाद्य हिन्दीभाषानुवादेन सह प्रकाश्यते श्रीमद्भिः द्वारकाप्रसादशास्त्रिमहाभागैः। आकारेण लघुरपि महत्तामावहत्ययं ग्रन्थो विषयस्य गाम्भीर्येण। अतो न केवलमयं प्राचीनभारतीय-युद्धविद्याविदां मोदाय, अपि तु आधुनिकयुद्धविद्याविशारदानां विनोदायापि कल्पिष्यत इति — नितरामहं विश्वसिमि।

अवधेयमस्त्यग्निपुराणानुसारमपि धनुर्वेदस्य स्वरूपं सुधीभिः तद्यथा—

> **चतुष्पादं धनुर्वेदं वदे पञ्चविधं द्विज !**
> **रथनागाश्वपत्तीनां योधांश्चाश्रित्यकीर्तितम्॥ इति॥**

एतत्तु स्वीक्रियते प्रायः सर्वैरेववेदविद्याविद्भिर्यद् धनुर्वेद उपवेदोऽस्ति यजुर्वेदस्य। आदिप्रवर्तकेन प्रोक्ते धनुर्वेदग्रन्थे षष्ठिसहस्रसंख्याकाः श्लोका आसन् इति श्रूयते। परशुरामप्रोक्तः—धनुश्चन्द्रोदयः, द्रोणाचार्यविहितः धनुष्प्रदीपः, वृद्धशार्ङ्गधरविरचितः—युक्तिकल्पतरुः अन्ये च नैके ग्रन्थाः संरचिता आसन् धनुर्वेदवाङ्मयस्याङ्गभूताः। किन्तु नैतेषां सम्प्रति समुपलभ्यन्ते पूर्णरूपेण संरक्षिता मातृकाः। अद्यत्वे धनुर्वेदस्य समुपलभ्यमानेषु ग्रन्थेषु येषां विषयाणां समावेशो दृश्यते, ते सन्ति धनुर्दीक्षा प्रकारः, धनुरभ्यासविधिः, धनुष् प्रक्षेपण विधिः, तथा धनुष्प्रयोगविधिः। धनुर्विद्यया सह अन्येषाम्-

आयुधानामपि प्रशिक्षणमावश्यकमासीत् । आयुधानां चातुर्विध्यं–मुक्त–अमुक्त–मुक्तामुक्त–यन्त्रमुक्तभेदात् सुप्रसिद्धमेव । अतो धनुर्धराः समग्रयुद्धकलाया ज्ञानमपेक्षन्ते । युद्धशास्त्रेषु चक्र-कुन्त-खड्ग-छुरिका-गदा-बाहुरूपेण सप्तविधानि युद्धरूपाणि उपदिष्टानि । तत्र नैपुण्यानुसारं समुपलभ्यते किमपि वर्गविधानमपि । तद्यथा––

**आचार्यः सप्तयुद्धः स्याच्चतुर्भिर्भार्गवः स्मृतः ।**
**द्वाभ्यां चैव भवेद्योध एकेन गणको भवेत् ।। इति ।।**

अस्मिन् ग्रन्थे नैके विषया विश्लेषिता दृश्यन्ते सम्यग्रूपेण । धनूंषि केन द्रव्येण निर्मीयन्ते ? धातुमयं, श्रृङ्गमयं काष्ठमयं वा । धनुः केन कुत्र कथं वा प्रयोक्तव्यम् ? धनुषां गुणा महिषीस्नायुभिः तत्काल-हतच्छागस्य स्नायुभिः पट्टसूत्रैर्वा निर्मातव्याः अथवा मुञ्जादिभि-रपि ? शराः कीदृशा भवितव्याः ? तत्र संहिताकारः शरविषये कथयति यत्––

**शराश्च त्रिविधा ज्ञेया स्त्री पुंसाश्च नपुंसकः ।**
**अग्रस्थूलो भवेन्नारी पश्चात् स्थूलो भवेत् पुमान् ।।**
**समो नपुंसको ज्ञेयस्तल्लक्ष्यार्थं प्रशस्यते ।**

अस्मिन् ग्रन्थे आरामुख–क्षुरप्र–गोपुच्छ–प्रभृतीनां बाणफला-नामपि समुचितं वर्णनमस्ति ।

धनुषः प्रयोगे स्थानानां विशिष्टं महत्त्वमस्ति । स्थानवैशिट्यं विना लक्ष्यसन्धानं सुदुष्करमिति निरूप्यते सुदृढं संहिताकारेण ।

उपर्युक्तरूपेण अस्मिन् ग्रन्थे तत्सर्वंनिरूपितमस्ति यद् धनुर्वेद-विद्याविषये ज्ञातव्यमस्ति । अस्य ग्रन्थस्य प्रकाशने श्रीमद्भि र्द्वारिका-प्रसादशास्त्रिमहाभागै र्धनुर्वेदस्य य उपकारः कृतः तदर्थं ते साधुवा-दार्हा वर्तन्ते । मन्ये विद्वत्समाजे अस्य ग्रन्थस्य भूयान् समादरो भविष्यति ।

**डा० चक्रधर बिजल्वानः**

# धनुर्वेदस्य परिचयः

**विषयप्रवेशः**

धनुर्वेदः प्राचीनस्य भारतीयविज्ञानस्यैका सुदृढ़ा सुप्रसिद्धा च शाखाऽस्ति । इदानीमस्याः शाखायाः ग्रन्था लुप्तप्रायाः सन्ति । द्वित्रान् कल्पितान् ग्रन्थान् विहाय अन्यस्या प्रतेः दर्शनमपि पुस्तकालयेषु दुर्लभमस्ति । अस्याः विद्यायाः लोपे सति देशस्य महती क्षतिः सञ्जाता । अद्य न कोऽपि दृश्यतेऽर्जुनसदृशो धनुर्धरः यस्य वाणाघातेन भीष्मपितामहेनापि कथितम् महाभारते—

> कृन्तन्ति मम गात्राणि माघमासे गवामिव ।
> अर्जुनस्य इमे वाणाः नेमे वाणाः शिखण्डिनः ॥[1]

धनुर्वेदस्य महत्त्वमस्माकं वेदेषु शास्त्रेषु पुराणेषु च सर्वत्रैव समुपलभ्यते । यजुर्वेदस्य षोडशसप्तदशाध्याययोः अश्वमेधयज्ञस्यप्रकरणेऽस्य महत्त्वं वर्णितमस्ति । अथर्ववेदस्य चतुर्थकाण्डस्य चतुर्थषष्ठत्रिंशत्तमानाम् सूक्तानां षष्ठे मन्त्रे तथा षष्टसप्तमैकादशपञ्चदशाष्टदशकाण्डानाम् प्रथमद्वितीयैकादशाष्टादशद्विपञ्चाशतसूक्तानाम् द्वितीये षष्ठेऽष्टमे नवमे द्वादशे षष्टितमे मन्त्रे च धनुषः महत्त्वं लिखितमस्ति । निरुक्तस्य नैगमे काण्डे द्वितीयेऽध्याये पञ्चमे षष्ठे खण्डे च सादरं चर्चितं धनुर्वेदस्य नाम । शांखायनादिश्रौतसूत्रेष्वपिऽश्वमेधस्य प्रकरणे धनुर्धरस्यापि चर्चास्ति । प्रायः पुराणेषु विशेषतः अग्निपुराणे धनुषः महत्त्वं तस्य चर्चा च समुपलभ्यते । एवं रामायणे महाभारते च धनुर्युद्धस्य मनोहारि वर्णनमस्ति । अनेन ज्ञायते यत् प्राचीनकालेऽस्य वेदस्य विपुलौ प्रचार-प्रसारौ बभूवतुः । यजुर्वेदस्योपवेदोऽयम् धनुर्वेदः । अस्य धनुर्वेदस्य प्रवर्तकः भगवान् शिवोऽस्ति । तस्य शिष्यः परशुरामः । एवं शिष्यपरम्परायाम् भगवान् रामचन्द्रः लक्ष्मणः द्रोणाचार्योऽर्जुनादयः वीराः सुप्रसिद्धाः धनुर्धराः बभूवुः ।

---

१. मागमा सेगवामिव पाठान्तरम् । मागमा वृश्चिकी प्रोक्ता तदपत्यानिसेगवा ।

( महाभारत भीष्मपर्व, ११४ अध्याय, श्लोक ६ )

इदम् सुप्रसिद्धमस्ति—

एकोऽपि यत्र नगरे प्रसिद्धः स्याद्धनुर्धरः ।
ततो यान्त्यरयो दूरात् मृगाः सिंहगृहादिव ॥ (पृ० २ श्लोक ६)

अस्मिन् ग्रन्थेऽस्याः विद्यायाः पात्रमपात्रञ्चापि लिखितमस्ति—

"नदेयमिति क्रूराय कुबुद्धयेऽशान्ताय गुरुद्रोहिणेऽभक्तायेति । देयमिति ब्रह्मचारिणे धर्मतः प्रजापालदुष्टदण्डविधारिणे साधुसंरक्षणायेति ।"

## ग्रन्थस्यास्यप्रकाशनम्

ग्रन्थोऽयमतिदुर्लभोऽस्ति । हिन्दीसाहित्यसम्मेलनस्य हिन्दीसंग्रहालय-स्याध्यक्षपदे स्थितवता मयाऽनेके पुस्तकालयाध्यक्षाः पृष्टाः किन्तु ग्रन्थस्या-स्यास्तित्वं न लब्धम् । अनेकेषाम् हस्तलिखितग्रन्थभाण्डागाराणाम् सूचयोऽपि मयाऽवलोकिताः किन्तु तास्वपि ग्रन्थस्यास्य विवरणम् मया न दृष्टम् । एकस्मिन् पुस्तकालये अस्य ग्रन्थस्य जीर्णा प्रतिपृष्ठशताधिकछिद्र-युता यत्र तत्र अपाठ्या एका प्रतिः मया दृष्टा । तस्याः प्रतिलिपिं कृत्वा मया सम्पादनकार्यमारब्धम् । ग्रन्थस्यास्य भाषा सरला प्रसादगुणयुता च । अतः विचारितम् मया यदस्य बोधार्थं संस्कृतज्ञानाम् कृते तु संस्कृतटीकायाः आवश्यकता नास्ति किन्तु हिन्दीभाषायामस्य ग्रन्थस्यानुवादेन हिन्दी-भाषाविदः संस्कृतज्ञाश्चापि लाभान्विताः भविष्यन्ति । इत्थं विचार्य मया ग्रन्थोऽयमनूदितः हिन्दीभाषायाम् ।

## ग्रन्थस्य विषयः

अस्य ग्रन्थस्य विषयः धनुर्वेदोऽस्ति । ग्रन्थेऽस्मिन् धनुर्विद्यायाः अस्त्राणाम् युद्धस्य विषये च क्रमबद्धवर्णनमस्ति । विषयप्रवर्त्तनम् सरलया रीत्याऽन्य-प्राचीनग्रन्थवदस्ति । नाऽयम् प्रश्नोत्तररूपो ग्रन्थः । एकदा विजिगिषूराजर्षिः विश्वामित्रो गुरुवशिष्ठमभ्युपेत्य प्रणम्य चोवाच । 'ब्रूहि भगवन् ! धनुर्विद्याम् दृढ़चेतसे शिष्याय मह्यम् ।' महर्षिप्रवरो वशिष्ठस्तमुवाच । "शृणु भो राजन् विश्वामित्रः ! पुरा भगवान् सदाशिवः यां सरहस्यां धनुर्विद्यां परशुरामायो-वाच तामेव याथातथ्येनाहं संप्रवक्ष्यामि । त्वम् शृणु" । अतः परं मूलविषयस्य प्रारम्भो भवति । ग्रन्थेऽस्मिन् यत्र तत्र वशिष्ठः विश्वामित्रं गाधिज ! गाधे ! इत्यादिपदैः सम्बोधयामास ।

यथा—

शरवंशाः गृहीतव्या शरदकाले च गाधिज !' (पृ० १४ श्लोक ५८)

अतः परं महर्षिणा वशिष्ठेन अस्मिन् विषये यत्कथितम् तस्य संक्षेपोऽयं विद्यते ।

## धनुर्वेदस्यविषयः

धनुर्वेदे चत्वारः पादाः सन्ति । प्रथमे पादे धनुर्विद्यायाः दीक्षा, द्वितीये पादेः धनुर्विद्यायाः अभ्यासविधिः, तृतीये पादे नुः प्रक्षेपणविधिः, चतुर्थे पादे प्रयोगविधयश्च वर्णिताः सन्ति । धनुर्वेदे ब्राह्मण एव गुरुरित्युक्तम् । दुष्टदस्युचोरादिभ्यः साधुसंरक्षणं, धर्मतः प्रजापालनञ्चेति धनुर्वेदस्य प्रयोजनमस्ति ।

## युद्धानि

धनुर्युद्धं कुन्तयुद्धं खड्गयुद्धं छुरिकायुद्धं गदायुद्धं बाहुयुद्धञ्चेति युद्धानि सप्तधा भवन्ति । एषु सप्तसु युद्धेषु निष्णातः आचार्यपदमलङ्करोति ।

## धनुर्दानविधिः

आचार्यः शुभे मुहूर्ते धनुर्विद्यायाः शिक्षां दद्यात् । ग्रन्थेऽस्मिन् ज्यौतिष-शास्त्रानुसारेण शुभमुहूर्तस्योल्लेखोऽस्ति । शुभमुहूर्ते दानहोमाभ्याम् सुरान् सन्तर्प्य ब्राह्मणान् कुमारीश्च भोजयित्वा वस्त्रालङ्कारभूषणैरन्नपानादिभि-श्चाचार्यं पूजयित्वा कृतोपवासः धृताजिनपरिग्रहः बद्धाञ्जलिपुटः शिष्यः आचार्यं धनुः याचयेत् । आचार्यः वेदविधानतः मन्त्राभिमन्त्रितं धनुः शिष्याय दद्यात् । शिष्यः तद्धनुः गृहीत्वा फलहीनेन पत्रिणा प्रथमं पुष्पवेधं कुर्यात् । ततः फलयुतेन पत्रिणा मत्स्यवेधमन्ते च मांसवेधं कुर्यात् । एवं वेधत्रयं कृत्वा ततः प्रणम्य गुरवे धनुर्वाणान्निवेदयेत् । ततः गुरुदक्षिणां दत्त्वा पुनः गुरुतः धनुर्गृह्णीयात् ।

## चापवर्णनम्

चापं द्विधाभवति । यौगिकं युद्धचापश्च । निजबाहुबलोन्मानात् किञ्चि-दूनं धनुः शुभं भवति । मानुषं चापं चतुर्हस्तप्रमाणकं भवति । तदेव सर्व-लक्षणसंयुतं मानवं चापमस्ति । धनुर्द्रव्यं त्रिविधं भवति लोहं शृङ्गं काष्ठञ्चेति । लोहानि स्वर्णरजतताम्रकृष्णायसानि । शृङ्गाणि महिष-

शरभरोहितानाम् । दारूणि चन्दनवेत्र-साधा-वन-शाल-शाल्मलि-साककक्कुभ-वंशाञ्जनानाम् । तत्र वंशवृक्षस्य धनुरतीव प्रसिद्धमस्ति । तच्च त्रिपर्वं पञ्चपर्वं सप्तपर्वं अथवा नवपर्वं सर्वदा शुभकारकं भवति । अतिजीर्णं अपक्वं दग्धं छिद्रयुतं गलग्रन्थ्यादिदोषयुतञ्च धनुः प्रयोगे वर्जितमस्ति । रथानाम् पदातीनाञ्च कृते वांशं चापं युक्तम् । शार्ङ्गं धनुः गजारोहाश्वसादिनाम् कृते प्रायो योज्यम् ।

## गुणलक्षणानि

धनुषो गुणः सुदृढो भवेत् । अयं गुणः कनिष्ठामानसम्मितः पट्टसूत्रकृतः शुद्धैस्त्रिगुणतन्तुभिः वर्त्तितः धनुःप्रमाणः श्लक्ष्णो युधि सर्वकार्यसहः स्यात् । पट्टसूत्रस्य अभावे हरिणीस्नायुभिः महिषीस्नायुभिरथवा तत्कालाहतछागस्य तन्तुना गुणः कार्यः । पट्टसूत्रेणसन्नद्धः पक्ववंशत्वक्निर्मितः गुणः स्थावरो-दृढश्च भवति । मुञ्जानामपि गुणः युधि सर्वकर्मसहो भवति ।

## शरलक्षणानि

धनुषः शराः सुदृढा भवेयुः । शरनिर्माणार्थं शरत्काले पूर्णग्रन्थि, सुपक्वं पाण्डुरं सुप्रदेशजं कठिनं वर्तुलं काण्डं ·गृह्णीयात् । एभिः काण्डैः कनिष्ठिका-वत् स्थूलाः पञ्चाङ्गुलिहीनाः द्विहस्तपरिमितदीर्घा शराः निर्मातव्याः । ततः षडंगुलिप्रमाणेन काकहंसशसक्रौञ्चकेकिगृद्धादीनाम् पक्षच्छेदं च कृत्वा चतुः संख्यकाः पक्षाः स्नायुतन्तुभिः शरे दृढाः योज्याः । एते शराः स्त्रीपुरुष-नपुंसकाश्चेति त्रिविधा भवन्ति । लक्ष्यार्थे नपुंसककोटिकः शरः, दूरपाते स्त्रीवर्गीयः शरः दृढभेदने च पुरुषवर्गीयः शरः प्रशस्यते ।

## फललक्षणम्

शराणाम् फलानि देशभेदेन बहुरूपाणि भवन्ति । तेषु क्षुरप्रं, आरामुखं, गोपुच्छकं, अर्द्धचन्द्रकं, सूचीमुखं, भल्लं, वत्सदन्तं, द्विभल्लकं, कर्णिकं, काक-तुण्डञ्चेति दशरूपाणि फलानि प्रसिद्धानि सन्ति । एतेषां कर्माणि भिन्नानि भवन्ति । यथा—आरामुखेन चर्मछेदनं, क्षुरप्रेण वाणकर्त्तनमित्यादीनि ।

## शरोपरि पायनम्

ओषधलेपनं पायनमितिकथ्यते । शरवंशसमूहे यदा स्वातिनक्षत्रे मेघ-बिन्दवः पतन्ति तदा स पीतवर्णो भवति । तस्य मूले विषमुत्पद्यते । तन्मूलं ग्राह्यम् । शरस्य फलोपरि तस्य चूर्णस्य लेपेन तत्फलम् विषयुतं भवति ।

एतादृशेन वाणेनाहतः योद्धा जीवितुं न शक्नोति । पिप्पली, सैन्धवं, कुष्टञ्च गृहीत्वा गोमूत्रेषु सुपेषयित्वा फलोपरि लेपनं विधाय ततोऽग्नौ प्रतापयेत् । ततः तत्फलं शुद्धेन जलेन शीतलं कुर्यात् । तच्छस्त्रं दुर्भेद्यान्यपि वस्तूनि तरुपर्णवत् भेत्तुं शक्नोति ।

## स्थानानि

लक्ष्यवेधनकाले तथा युद्धकाले च धनुर्धारिणः विविधानि स्थानान्यवलम्ब्य वाणान् प्रक्षिपन्ति । इमानि स्थानानि लोके 'पैंतरा' शब्देनाभिधीयन्ते । अष्टौ स्थानानि भिन्नकर्मणाम् योजने प्रयुक्तानि भवन्ति । प्रत्यालीढं, विशाखः, आलीढं, समपादः, विषमपादः, दर्दुरक्रमः, गरुडक्रमः, पद्मासनमित्येतानि । इमानि सोद्देश्यानि भवन्ति । यथा—आलीढस्थानमवलम्ब्य वाणस्य दूरपातः समुपयुक्तो भवति । कूटलक्ष्यवेधने विशाखस्थानकं प्रयोक्तव्यम् ।

## गुणमुष्टिः

दक्षिणहस्तस्यांगुलिभिः धनुषः गुणस्य ग्रहणसूचकाः नियमाः गुणमुष्टिपदेनाभिहिता भवन्ति । इमाः गुणमुष्टयः पञ्चधा भवन्ति—पताका, वज्रमुष्टिः, सिंहकर्णः, मत्सरी, काकतुण्डी चेति । इमा अपि यथाक्रमं योजनीयाः । विशिष्टं प्रयोजनमुद्दिश्य तत्साधिका गुणमुष्टिः प्रयुज्यते । यथा—अंगुष्ठमध्यदेशः तर्जन्यग्रे स्थिते सति सिंहकर्णो भवति । अस्य प्रयोगः दृढलक्ष्यस्यवेधने भवति ।

## धनुर्मुष्टि सन्धानम्

वामहस्तेन धनुषः मध्यभागस्य ग्रहणं धनुर्मुष्टिरिति कथ्यते । धनुर्मुष्टिसन्धानं त्रिविधं भवति । अधः सन्धानमूर्द्धसन्धानंसमसन्धानञ्चेति । वाणस्यदूरपातित्वेऽधः सन्धानमपेक्ष्यते । निश्चले लक्ष्ये समसन्धानम्, दृढास्फोटार्थे ऊर्द्धसन्धानस्य प्रयोगो भवति ।

## धनुर्ज्यायाः

धनुषः आकर्षणप्रणाली ज्यायपदेन गृह्यते । ज्यायाः पञ्चधा भवन्ति । कैशिकः, सात्त्विकः, वत्सकर्णः, भरतः, स्कन्धश्चेति । इमे ज्याया अपि सोद्देश्याः । केशमूलपर्यन्तम् धनुषः आकर्षणं कैशिकः ज्यायः । अस्योपयोगः चित्रयुद्धेषु भवति । एवमन्येऽपि ज्यायाः सोद्देश्याः भवन्ति ।

**लक्ष्यम्**

लक्ष्यं चतुर्विधं भवति—स्थिरं, चलं, चलाचलं, द्वयचलञ्चेति। आत्मस्थाने स्थितः यः धन्वी चलं लक्ष्यं वेधयति तच्चललक्ष्यं भवति। अस्य वेधी चलवेधीति कथ्यते। वेध्यं वस्तु यदा वेगेन भ्रमति, धनुधार्यपि तल्लक्ष्यं वेधयितुं वेगेन भ्रमति, तल्लक्ष्यं द्वयचलमिति कथ्यते। यदा लक्ष्यं स्थिरं भवति, धनुर्धारी भ्रमन् तल्लक्ष्यं वेधयति तत्तु चलाचलं लक्ष्यं कथ्यते। एषु द्वयचललक्ष्यवेधः बहुश्रमेण साध्यते।

**लक्ष्याभ्यासः**

प्रथमं वामहस्तेन लक्ष्याभ्यासः कार्यः। अनेन प्रकारेणाचिरादेवक्रियासिद्धिर्भवति। वामहस्ते संसिद्धे ततः दक्षिणहस्तेनाभ्यासः कार्यः। भास्करे उदिते पश्चिमायां दिशि लक्ष्यं स्थापनीयम् तथा चापराह्णे पूर्वस्याम् दिशि। उत्तरस्यां दिशि तु सदा लक्ष्यं स्थापनीयम् किन्तु संग्रामेण विना दक्षिणाभिमुखं लक्ष्यं न कार्यम्।

**अनध्यायः**

अष्टमी, अमावास्या, चतुर्दशी तथा पूर्णिमार्द्धदिनं शस्त्रविषयकेषु सर्वकर्मसु निषिद्धमस्ति। अकाले प्रभाते वा मेघे गर्जिते, दुर्दिने, अनुराधानक्षत्रादारभ्यमृगशिरानक्षत्रपर्यन्तं स्थिते भास्करे, अभ्यासकाले सर्पदर्शने, चापे गुणे वा त्रुटितेऽनध्यायो भवति। एतादृशे योगे समुत्पन्ने श्रमं न कुर्यात्।

**सज्जीकरणम्**

धन्वी प्रथमं चापे वाणमारोप्य ततः चूलिकां बध्नीयात्। ततः स्थानकं कृत्वा वाणोपरि करं न्यसेत्। वामपाणिना धनुषस्तोलनं कर्त्तव्यम्। ततः संधानमाचरेत्। ततः शिवं गुरुं विघ्नराजं धनुः शरांश्च नमस्कुर्यात्। गुरावुपस्थिते सति तस्याज्ञा याचितव्या। ततः प्राणायामक्रियां कुर्वन् हुङ्कारपूर्वकं वाणं विसर्जयेत्। अनेन प्रकारेण धन्विना अभ्यासक्रिया कार्या।

**दुःसाध्यं लक्ष्यवेधनम्**

साधारणलक्ष्याणाम् वेधनस्याभ्यासे सञ्जाते ततः धन्वी अयश्चर्ममृत्पिण्डघटानाम् च वेधने अभ्यासं कुर्यात्। ततः दूरस्थितं चित्रवेधनं, काष्ठवेधनं, धावल्लक्ष्यवेधनं शब्दवेधनादिकं दुःसाध्यं लक्ष्यवेधनं सम्यगधीत्य तेष्वभ्यासः

कार्यः । एवं सिद्धिपर्यन्तं श्रमं कुर्यात् । श्रमे सिद्धे वर्षासु करे धनुर्न ग्राह्यम् । पूर्वाभ्यासस्याविस्मरणहेतवे प्रतिवर्षं शरदृतौ मासद्वयं श्रमं कुर्यात् ।

### अस्त्रादिसिद्धिविधिः

आश्विनमासे नवम्यां चण्डीं गुरुं शस्त्राणि वाजिनश्च पूजयेत् । देव्यै पशुबलिं दद्यात् । कुमारीश्च पूजयेत् । ततः विधानतः जपहोमादिकं सम्पाद्य अस्त्राणाम् कर्म सिद्धयर्थं वेदोक्तानागमोदितांश्च मन्त्रान् साधयेत् । ब्राह्मं नारायणं शैवमैन्द्रम् वायव्यं वारुणमाग्नेयञ्च तथा गुरुदत्तान्यन्यानिचास्त्राणि साधयेत् । लब्धास्त्रेण शिष्येण मनोवाक्कर्मभिः शुचिना भाव्यम् ।

अस्त्रेषु ब्रह्मास्त्रं, ब्रह्मदण्डकं, ब्रह्मशिरः, पाशुपतं, वायव्यमाग्नेयं नरसिंहमित्येतानि प्रमुखान्यस्त्राणि सन्ति । एषामस्त्राणां प्रयोगोपसंहारवपि भवतः । प्रत्येकास्त्रस्य मन्त्रः पृथक्-पृथक् भवति । तं मन्त्रं यथाविधि जप्त्वा मन्त्रेणशस्त्रमभिमन्त्र्य शत्रुषु क्षिपेत् । ग्रन्थेऽस्मिन् सर्वमेतत् सविस्तरं वर्णितमस्ति ।

### व्यूहः

युद्धे व्यूहरचना महत्त्वपूर्णा भवति । दण्डव्यूहः, शकटव्यूहः, वराहव्यूहः, मकरव्यूहः, सूचीव्यूहः, गरुडव्यूहः, पद्मव्यूहादयः प्रमुखा व्यूहा भवन्ति । सर्वतोभये दण्डव्यूहः, पश्चाद्देशे भये समुत्पन्ने शकटव्यूहः अग्रतोभये पिपीलिकाव्यूहः, इत्यनेन प्रकारेण यथोचितं व्यूहं विधाय तदनुसारेण विविधां वाहिनीं सेनाधिकारिणश्च सम्यक् संनियोज्य युद्धं कुर्यात् ।

### धनुर्वेदेऽन्यशास्त्राणामुपयोगः

धनुर्वेदेऽन्येषामपि शास्त्राणां समुल्लेखः लभ्यते । तेषां सहयोगेन धनुर्वेदस्य रचनासंभूता । ज्यौतिषशास्त्रं, स्वरशास्त्रं, आयुर्वेदः, नीतिशास्त्रं, मन्त्रशास्त्रं, योगशास्त्रं, कर्मकाण्डमित्यादीनाम् सहयोगेन धनुर्वेदस्य निर्माणोऽभूत् । धनुर्धरः आस्तिकः भवेत् । स विहितेन कर्मकाण्डेन सज्जितो भूत्वा गुरुतः धनुः याचेत ।

यथा—

सन्तर्प्य दानहोमाभ्यां सुरान् स्वाहा विधानतः ॥ १५ ॥ पृ० ४
ब्राह्मणान् भोजयेत् भक्त्या कुमारीश्चाप्यनेकशः ।
तापसानर्चयेद् भक्त्या ये चान्ये शिवयोगिनः ॥ १६ ॥ पृ० ४

अन्नपानादिभिश्चैव वस्त्रालङ्कारभूषणैः ।
गन्धमाल्यैर्विचित्रैश्च गुरुं तत्र प्रपूजयेत् ॥ १७ ॥ पृ० ५
कृतोपवासः शिष्यस्तु धृताजिनपरिग्रहः ।
बद्धाञ्जलिपुटश्चैव याचयेत् गुरुतो धनुः ॥ १८ ॥ पृ० ५

आचार्येणापि शिष्यस्य सिद्धिमिच्छता पापघ्नः, विघ्ननाशनः शिवोक्तोऽङ्गन्यासः कार्यः । ततो गुरुः शिष्याय मन्त्राभिमन्त्रितं मानुषं चापं वेदविधानतः दद्यात् । एवमाकृष्टचापो धनुर्धरः शिवं विघ्नराजं गुरुं धनुः शरांश्च नमस्कुर्यात् । ततः तेन धनुर्धरेण बाणस्याकर्षणं प्रति गुरोराज्ञा याचनीया ।

योगशास्त्रस्यावलम्बनं गृहीतं यथा—

प्राणवायुं प्रयत्नेन प्राणेन सह पूरयेत् ।
कुम्भकेन स्थिरं कृत्वा हुङ्कारेण विसर्जयेत् ॥ २१ ॥ पृ० २६
आकृष्य प्राणपवनं समारोहेच्च वाहनम् ।
समुत्तरेत् पदं दद्यात् सर्वकार्याणि साधयेत् ॥ २६ ॥ पृ० ४६

ज्यौतिषशास्त्रस्याप्याश्रयो गृहीतो यथा—

हस्तः पुनर्वसुः पुष्यो रोहिणी चोत्तरात्रयम् ।
अनुराधाश्विनी चैव रेवती दशमी तथा ॥ ११ ॥ पृ० ४
जन्मस्थे च तृतीये च षष्ठे वै सप्तमे तथा ।
त्र्योदशी द्वादशी चैव तिथयस्तु शुभा मताः ॥ १२ ॥ पृ० ४
रविवारः शुक्रवारो गुरुवारस्तथैव च ।
एतद्वारं त्रयं धन्यं प्रारम्भे शस्त्रकर्मणाम् ॥ १३ ॥ पृ० ४

स्वरशास्त्रस्याप्याश्रयो गृहीतो यथा—

या नाडी वहते चाङ्गे तस्यामेवाधिदेवता ।
सम्मुखेऽपि दिशा तेषां सर्वकार्यफलप्रदा ॥ १७ ॥ पृ० ४८
यां दिशं वहते वायुः युद्धं तद्दिशि दापयेत् ।
जयत्येव न सन्देहः शक्रोऽपि यदि चाग्रतः ॥ १८ ॥ पृ० ४८
तत्त्वबलान्नाडीबलमधिकं प्रोक्तं कपर्दिना नित्यम् ।
ज्ञात्वैनं स्वरचारं नरो भवेत् कार्यनिपुणमतिः ॥ ३२ ॥ पृ० ५०

शकुनस्याश्रयं यथा—

पृष्ठेन वायवो वान्ति पृष्ठे भानुवयांसि च ।
अनुप्लवन्ते मेघाश्च यस्य तस्य रणे जयः ॥ ४३ ॥ पृ० ५४

आयुर्वेदस्यौषधीनामपि प्रयोगः यथा—

पिप्पली सैन्धवं कुष्टं गोमूत्रेषु सुपेषयेत् ।
अनेन लेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ॥
शिखिग्रीवानुवर्णाभं तप्तपीतं तथौषधम् ।
ततस्तु विमलं तोयं पाययेच्छस्त्रमुत्तमम् ॥७१-७२॥ पृ० १६

उक्तप्रकारेण सिद्धौषधस्य वाणस्य फलं विषयुतं भवति । तेन वाणेनाहतो सैनिको वा यो वा को वा सः म्रियते । तं त्रातुं न काप्यौषधिः । तेन विषाक्तेन फलेन दुर्भेद्यान्यपि वस्तूनि पर्णवत् भिद्यन्ते ।

अन्यच्च

अधःपुष्पी शङ्खपुष्पी लज्जालु गिरिकर्णिका ।
नलिनी सहदेवी च पत्रमोच्चार्कयोस्तथा ॥

विष्णुकान्ता च सर्वासाम् जटा ग्राह्या रवेर्दिने ।
बद्धा भुजेविलेपाद्वा कायें शस्त्रापवारकाः ॥ ३-४ ॥ पृ० ४४

छुच्छुन्दरीश्रीफलपुष्पचूर्णैरालिप्तगात्रस्यनरस्यदूरात् ।
आघ्राय गन्धं द्विरदोऽतिमत्तो मदं त्यजेत् केसरिणो यथोग्रम् ॥८॥ पृ० ४५

श्वेताद्रिकर्णिका मूलं पाणिस्थं वारयेद्गजम् ।
श्वेतकण्टारिकामूलं व्याघ्रादीनां भयं हरेत् ॥ ९ ॥ पृ० ४५

शुभ्रायाः परपुङ्खाया जटन्नीली जटाथवा ।
भुजे शिरसि वक्त्रे वा स्थिता शस्त्रनिवारिका ॥ १२ ॥ पृ० ४६
भूपाहि चोरभीतिघ्नी गृहीता पुष्यभास्करे ॥ १२ ॥

धनुर्वेदे मन्त्रतन्त्राणामपि सहयोगः फलदायकोऽस्ति । तत्र ब्रह्मास्त्रादीनां प्रक्षेपणे पृथक् पृथक् मन्त्राणां प्रयोगो भवति ।

यथा ब्रह्मास्त्रप्रयोगे—

दादिदान्ताश्च सावित्रीं विपरीतां जपेत् सुधीः ।
जप्त्वा पूर्वं निखर्वञ्च त्वभिमन्त्र्य विधिवच्छरम् ॥ पृष्ठ ३९

क्षिपेच्छत्रुषु सहसा नश्यन्ति सर्वजातयः।
बालावृद्धाश्च गर्भस्था ये च योद्धुं समागताः॥
सर्वे ते नाशमायान्ति मम चैव प्रसादतः।
यथातथं दादिदान्तं जयेत्संहारहेतवे ॥८३-४४॥ पृ०३९

एवमन्येषामप्यस्त्राणाम् ब्रह्मदण्डब्रह्मशरपाशुपतादीनां प्रयोगेऽपि प्रयोग-संहारयोः मन्त्राः वर्णिताः सन्ति । युद्धारम्भेऽपि मन्त्रस्य प्रयोगः ध्यानञ्च कर्तव्यम् ।

यथा—

ओउम् नमो परमात्मने शक्तिमते विरूपाक्षाय भालनेत्राय रं हुं फट् स्वाहा ।

रुद्रं ध्यात्वा तन्मन्त्रं पठेत् ।

ततो हैमवतीं ( दुर्गां ) ध्यात्वा प्रणम्य युद्धमारभेत ।

ओं ह्रीं श्रीं हैमवतीश्वरीं ह्रीं स्वाहा। ओं ह्रीं वज्रयोगिन्यै स्वाहा । इति मन्त्रेण सिंहासनस्थां रुद्राणीं ध्यायेत् ॥ १४ ॥ पृ० ४७

## मुद्रा—

संग्रामविधौ प्रथमतः सर्पमुद्रा कार्या ।

उक्तञ्च

आदौ तु क्रियते मुद्रा पश्चाद् युद्धं समाचरेत् ।
सर्पमुद्रा कृता येन तस्य सिद्धिर्न संशयः ॥ १३ ॥ पृ० ४६

तन्त्रे वर्णिताः अष्टमातरोऽपि रक्षाकारिण्यो भवन्ति ।

उक्तञ्च

सर्पव्याघ्रादिसत्त्वानां भूतादीनां न जायते ।
भीतिस्तस्य स्थिता यस्य मातरोऽष्टौ शरीरके ॥ ५ ॥ पृ० ४५

युद्धस्य नीतिशास्त्रमपि धनुर्वेदे वर्णितमस्ति। प्रथमस्तु कातरं पुरुषं युद्धे सेनापतिपदे न नियोजयेत् ।

एकः कापुरुषो दीर्णो दारयेत् महतीं चमूम् ।
तद्दीर्णमनुदीर्यन्ते योधाः शूरतमा अपि ॥ ३७ ॥ पृ० ५३
अतो वै कातरं राजा बले नैव नियोजयेत् ॥ ३८ ॥ पृ० ५४

अधोलिखितान् वीरान् न हन्यात्—

मूर्छितं न विकलं नाशस्त्रं नान्ययोधिनम् ।
पलायमानं शरणं गतञ्चैव न हिंसयेत् ।। ४१ ।। पृ० ५४

तथा च——

भीरुः पलायमानोऽपि नान्वेष्टव्यो बलीयसा ।। ४२ ।। पृ० ५४
सुप्तं प्रमत्तमुन्मत्तं ह्यकच्छं शस्त्रवर्जितम् ।
बालं स्त्रियं दीनवाक्यं धावन्तं नैव घातयेत् ।। ६४ ।। पृ० ६१

क्षात्रधर्मस्य चर्चाऽपि धनुर्वेदे विहिताऽस्ति ।

यथा——

जिते लक्ष्मीर्मृते स्वर्गः कीर्तिश्च धरणीतले ।
तस्माद्धैर्यं विधायैव हन्तव्या परवाहिनी ।।
अधर्मः क्षत्रियस्यैषः यद्व्याधिमरणं गृहे ।
यदाजौ निधनं याति सोऽस्य धर्मः सनातनः ।। ४६ ।। पृ० ५५
द्वाविमौ पुरुषौ लोके सूर्यमण्डलवेधिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखोहतः ।। ३८ ।। पृ० ५४
यत्र यत्र हतः सूरः शत्रुभिः परिवेष्ठितः ।
अक्षय्यं लभते लोकं यदि क्लीवं न भाषते ।। ४० ।। पृ० ५४
धर्मार्थे यः त्यजेत् प्राणान् किं तीर्थेन जपेन किम् ।
मुक्तिभागी भवेत् सोऽपि निरयं नाधिगच्छति ।। ६५ ।। पृ० ६१
ब्राह्मणार्थे गवार्थे वा स्त्रीणाम् बालवधेषु च ।
प्राणत्यागपरो यस्तु स वै मोक्षमवाप्नुयात् ।। ६६ ।। पृ० ६२

अधुना समाचारपत्रेषु प्रतिदिनं पठ्यते दृश्यते च प्रत्यक्षं यत् सामान्ये-ष्वपि वार्तालापेषु समुत्पन्ने रोषेऽस्त्राणां प्रयोगो भवति किन्तु धनुर्वेदस्येद-मत्राभिमतमस्ति——

'सामान्ये कर्मणि प्राज्ञो नैवास्त्राणि प्रयोजयेत्' ।

इत्थमयं ग्रन्थोऽधुनापि लोकोपकारकः मार्गप्रदर्शकश्चास्ति ।

# आभारप्रदर्शनम्

ग्रन्थस्यास्य प्रकाशनार्थं उत्तरप्रदेशसंस्कृतअकादमी पञ्चसहस्त्रमुद्रा अद-दात् । एतदर्थमकादमीपदाधिकारिणो धन्यवादार्हाः सन्ति । लखनऊ-केन्द्रीय-संस्कृतविद्यापीठस्याचार्यपदमलङ्कुर्वाणाः डा० चक्रधर बिजल्वानमहाभागाः भूमिकां लिखित्वा ग्रन्थस्य कृते गौरवं प्रदत्तवन्तः । तान् प्रत्यहं स्वकृतज्ञतां ज्ञापयामि । मदीया शिष्या कुमारी माया बोस महोदया ग्रन्थस्यास्य मुद्रण-योग्यां सुपाठ्यां प्रतिलिपिं सज्जीकृतवती । तस्या मङ्गलमहं कामयेमम सहयोगिना श्रीरमेशचन्द्रश्रीवास्तवेन प्रूफादिसंशोधने प्रकाशकं प्रति प्रूफादिप्रेषणे च मम साहाय्यं कृतम् । अतः सोऽपिममाशीर्वादभागस्ति । क्व च लखनऊ नगरं क्व चास्ति वाराणसी ! प्रकाशकसम्पादकयोर्मध्ये महदन्तर-मस्ति । पत्रालयमाध्यमेन प्रूफादिसंशोधनकार्यं सञ्जातम् । अतः ग्रन्थेऽस्मिन् मुद्रणत्रुटियोऽपि सम्भाव्याः । विद्वद्भिस्ताः क्षन्तव्याः ।

लखनऊ — विदुषां वशंवदः

दिनांक : १५-६-१९८९ — **द्वारकाप्रसाद शास्त्री**

# विषयानुक्रमणिका

महर्षिवशिष्ठविरचिता

# धनुर्वेदसंहिता

अथैकदा विजिगीषुर्विश्वामित्रो राजर्षिर्गुरुवशिष्ठमभ्युपेत्य प्रणम्योवाच। ब्रूहि भगवन्! धनुर्विद्यां श्रोत्रियाय दृढ़चेतसे शिष्याय दुष्टशत्रुविनाशाय च। तमुवाच महर्षि-ब्रह्मर्षिप्रवरो वशिष्ठः, शृणु भो राजन् विश्वामित्र! यां सरहस्यधनुर्विद्यां भगवान् सदाशिवः परशुरामायोवाच तामेव सरहस्यां वच्मि ते हिताय, गो-ब्राह्मण-साधु-वेद-संरक्षणाय च यजुर्वेदाथर्व-सम्मितां[1] संहिताम्।

अथोवाच महादेवो भार्गवाय च धीमते।
तत्तेऽहं संप्रवक्ष्यामि यथातथ्येन संशृणु॥ १॥

एक समय विजय की इच्छा रखने वाले राजर्षि विश्वामित्र गुरु वशिष्ठ के आश्रम में उपस्थित हो कर उनको प्रणाम कर के बोले—हे भगवन्! आप दृढ़हृदय श्रोत्रिय मुझ शिष्य को दुष्ट शत्रु के विनाश के लिए धनुर्विद्या का उपदेश कीजिए। महर्षि—ब्रह्मर्षिप्रवर वशिष्ठ ने राजर्षि विश्वामित्र से कहा—हे राजन् विश्वामित्र! सुनो। भगवान् शिवजी ने जिस रहस्य सहित धनुर्विद्या का ज्ञान (उपदेश) परशुराम को दिया था, उसी रहस्य सहित धनुर्विद्या को गाय, ब्राह्मण, साधु और वेद की रक्षा के लिए एवं तुम्हारे हित के लिए मैं तुमको बताता हूँ। यह विद्या यजुर्वेद और अथर्ववेद सम्मत संहिता के नाम से प्रसिद्ध है।

महादेव जी ने बुद्धिमान परशुराम से जिस प्रकार कहा था, मैं भी उसी प्रकार तुमसे उस धनुर्विद्या को बताऊँगा। तुम भलीभांति सावधान होकर सुनो॥ १॥

---

१. सम्मतां।

तत्र चतुष्टयपादात्मको धनुर्वेदः। यस्य प्रथमे पादे दीक्षाप्रकारः। द्वितीये संग्रहः, तृतीये सिद्धप्रयोगाः, चतुर्थे प्रयोगविधयः ॥ २ ॥

अथ कस्य धनुर्वेदाधिकार इत्यपेक्षायामाह।

धनुर्वेदे गुरुर्विप्रः प्रोक्तो वर्णद्वयस्य च।
युद्धाधिकारः शूद्रस्य स्वयं व्यापादि शिक्षया ॥ ३ ॥

चतुर्विधमायुधम्। मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तञ्चेति ॥ ४ ॥

दुष्टदस्युचोरादिभ्य[1] साधुसंरक्षणं धर्म्मतः।
प्रजापालनं धनुर्वेदस्य प्रयोजनम् ॥ ५ ॥
एकोऽपि यत्र नगरे प्रसिद्धः स्याद्धनुर्धरः।
ततो यान्त्यरयो दूरान्मृगाः सिंहगृहादिव ॥ ६ ॥

---

भगवान शिव ने कहा कि धनुर्वेद में चार पाद हैं। इसके प्रथम पाद में धनुर्विद्या की दीक्षा, द्वितीय पाद में संग्रह अर्थात् धनुर्वेद के अभ्यास की विधि, तृतीय पाद में सिद्ध प्रयोग अर्थात् धनुः प्रक्षेपण विधि एवं चतुर्थपाद में प्रयोग विधियाँ अर्थात् अस्त्र सन्धान आदि की प्रयोग विधि वर्णित है ॥२॥

धनुर्वेद में किसका अधिकार है? इसके उत्तर में कहते हैं कि धनुर्वेद में ब्राह्मण ही गुरु (शिक्षक) है। युद्ध का अधिकार ब्राह्मण और क्षत्रिय इन दो वर्णों को है। अपने व्यक्तिगत प्रयोजन (जैसे शिकार आदि) के लिए शूद्र को भी धनुर्वेद की शिक्षा ग्रहण करने का अधिकार है ॥ ३ ॥

आयुध चार प्रकार के होते हैं। मुक्त, अमुक्त, मुक्तामुक्त और यन्त्रमुक्त। जो हाथ से छोड़ा फेंका जाता है जैसे चक्र आदि; उसको मुक्त आयुध कहते हैं। जो आयुध हाथ से छूटता नहीं उसको अमुक्त आयुध कहते हैं। जैसे तलवार आदि, इसी प्रकार मुक्तामुक्त जैसे बरछी आदि। यन्त्रमुक्त अर्थात् मशीन से छोड़ा गया आयुध जैसे गोला आदि ॥ ४ ॥

दुष्टों, डाकुओं और चोरों आदि से सज्जनों की रक्षा तथा धर्म के अनुसार प्रजा का पालन यही धनुर्वेद की शिक्षा का प्रयोजन है ॥ ५ ॥

जिस नगर में एक भी प्रसिद्ध धनुर्विद्या में पारङ्गत धनुर्धर हो उस नगर से शत्रु उसी प्रकार दूर भाग जाते हैं जैसे सिंह की गुफा से जंगली पशु दूर भाग जाते हैं ॥ ६ ॥

---

१. चोरादिभ्यः।

## अथ धनुर्दानविधि

आचार्य्येण धनुर्देयं ब्राह्मणे सुपरीक्षिते ।
लुब्धे धूर्त्ते कृतघ्ने च मन्दबुद्धौ न दापयेत् ॥ ७ ॥
ब्राह्मणाय धनुर्देयं खड्गं वै क्षत्रियाय च ।
वैश्याय दापयेत् कुन्तं गदां शूद्राय दापयेत् ॥ ८ ॥
धनुश्चक्रश्च कुन्तश्च खड्गश्च छुरिका गदा ।
सप्तमं बाहुयुद्धं स्यादेवं युद्धानि सप्तधा ॥ ९ ॥

## अथाचार्यलक्षणम्

आचार्यः सप्तयुद्धः स्याच्चतुर्भिर्भार्गवः स्मृतः ।
द्वाभ्यां चैव भवेद्योध एकेन गणको भवेत् ॥ १० ॥

---

**अब धनुर्विद्या के दान की विधि कहते हैं।**

आचार्य भलीभाँति जाने समझे हुए ब्राह्मण को धनुर्विद्या का दान करे अर्थात् शिक्षा दे। लोभी, धूर्त्त, कृतघ्न और मूर्ख को धनुर्विद्या की शिक्षा न देनी चाहिये ॥ ७ ॥

ब्राह्मण को धनुष, क्षत्रिय को तलवार, वैश्य को भाला और शूद्र को गदा युद्ध की शिक्षा देनी चाहिए ॥ ८ ॥

युद्ध सात प्रकार के होते हैं—धनुष युद्ध, चक्र युद्ध, भाला युद्ध, खड्ग युद्ध, छुरिका युद्ध, गदा युद्ध और बाहु युद्ध ( कुश्ती ) ॥ ९ ॥

( इनमें से धनुषयुद्ध के अन्तर्गत यंत्रयुद्ध, क्षेपणी युद्ध आदि आते हैं। कुन्तयुद्ध के अन्तर्गत त्रिशूल युद्ध, शक्ति युद्ध और प्रास युद्ध आदि आते हैं। खड्ग युद्ध के अन्तर्गत कृपाण युद्ध, पट्टिश युद्ध, परशु युद्ध आदि आते है। गदा युद्ध के अन्तर्गत परिध युद्ध, मुसल युद्ध, भुशुंडि युद्ध; मुद्गर युद्ध, लकुड ( लाठी ) युद्ध आदि आते हैं। )

**आचार्य का लक्षण**

जो पहले बताये हुये सातों प्रकार के युद्ध का ज्ञाता हो उसको आचार्य कहते हैं। चार प्रकार के युद्ध को जानने वाले को भार्गव, दो प्रकार के युद्ध जानने वाले को योधा और केवल किसी एक प्रकार के युद्ध के जानने वाले को गणक कहते हैं ॥ १० ॥

हस्तः पुनर्वसुः पुष्यो रोहिणी चोत्तरात्रयम् ।
अनुराधाश्विनी चैव रेवती दशमी तथा ॥ ११ ॥

जन्मस्थे च तृतीये च षष्ठे वै सप्तमे तथा ।
दशमैकादशे चन्द्रे सर्वकार्य्याणि कारयेत् ॥ १२ ॥

तृतीया पञ्चमी चैव सप्तमी दशमी तथा ।
त्रयोदशी द्वादशी च तिथयस्तु शुभामताः ॥ १३ ॥

रविवारः शुक्रवारो गुरुवारस्तथैव च ।
एतद्वारं त्रयं धन्यं प्रारम्भे शास्त्रकर्म्मणाम् ॥ १४ ॥

ऐभिर्दिनैस्तु शिष्याय गुरुः शास्त्राणि दापयेत् ।
सन्तर्प्यदानहोमाभ्यां सुरान् स्वाहा विधानतः ॥ १५ ॥

ब्राह्मणान् भोजयेत् तत्र कुमारींश्चाप्यनेकशः ।
तापसानर्चयेद्भक्त्या ये चान्ये शिवयोगिनः ॥ १६ ॥

---

धनुर्विद्या की शिक्षा देने के लिये हस्त, पुनर्वसु, पुष्य, रोहिणी, उत्तरा फाल्गुनी, उत्तरा भाद्रपद, उत्तराषाढ़, अनुराधा, अश्विनी और रेवती—ये दस नक्षत्र शुभ होते हैं ॥ ११ ॥

जन्म राशि पर अथवा उसके तीसरे, छठें, सातवें, दसवें या ग्यारहवें स्थान पर चन्द्रमा स्थित हो तो आचार्य द्वारा धनुर्वेद की शिक्षा देने से सब कार्य सिद्ध होते हैं ॥ १२ ॥

तृतीया, पञ्चमी, सप्तमी, दशमी और त्रयोदशी—ये तिथियाँ धनुर्वेद की शिक्षा के आरम्भ के लिए शुभ मानी जाती हैं ॥ १३ ॥

शस्त्र विद्या की शिक्षा का प्रारम्भ करने के लिए रविवार, शुक्रवार और गुरुवार ये—तीन वार शुभ फलदायक होते हैं ॥ १४ ॥

उक्त दिन, तिथि और नक्षत्रों से युक्त शुभ मूहूर्त्त में आचार्य द्वारा दान और हवन से देवताओं को विधिपूर्वक स्वाहा प्रदान कर इनको तृप्त कराके शिष्य को शस्त्र विद्या की शिक्षा देनी चाहिये ॥ १५ ॥

शिष्य उस दिन अनेक कुमारी कन्याओं और ब्राह्मणों को भोजन करावे । शिवभक्त योगियों और तपस्वियों की पूजा करे ॥ १६ ॥

अन्नपानादिभिश्चैव वस्त्रालङ्कारभूषणैः।
गन्धमाल्यैर्विचित्रैश्च गुरुं तत्र प्रपूजयेत् ॥ १७ ॥
कृतोपवासः शिष्यस्तु धृताजिनपरिग्रहः।
बद्धाञ्जलिपुटस्तत्र याचयेद्[1] गुरुतो धनुः ॥ १८ ॥
अङ्गन्यासं ततः कार्यं शिवोक्तं सिद्धिमिच्छता।
आचार्य्येण च शिष्यस्य पापघ्नं विघ्ननाशनम् ॥ १९ ॥
शिखास्थाने न्यसेदीशं बाहुयुग्मे च केशवम्।
ब्रह्माणं नाभिमध्ये तु जङ्घयोश्च गणाधिपम् ॥ २० ॥
ओं ह्रीं शिखास्थाने शङ्कराय नमः,
ओं ह्रीं बाह्वोः केशवाय नमः,
ओं ह्रीं नाभिमध्ये ब्रह्मणे नमः;
ओं ह्रीं जङ्घयोर्गणपतये नमः ॥ २१ ॥

---

इसके बाद शिष्य अन्न-पान आदि के द्वारा तथा वस्त्र अलंकार आदि से भूषित करके अद्भुत सुगन्धित द्रव्यों और मालाओं से गुरु की पूजा करे ।१७।

उपवास किया हुआ तथा मृगचर्म धारणा किया हुआ शिष्य दोनों हाथ जोड़ कर गुरु से धनुर्विद्या देने की प्रार्थना करे ॥ १८ ॥

इसके बाद शिष्य की सिद्धिलाभ की इच्छा रखनेवाला आचार्य शिष्य के पापों को नाश करने और विघ्न नाश करने वाले, शिव जी द्वारा उक्त अङ्गन्यास करे ॥ १९ ॥

आचार्य शिष्य की शिखा के स्थान पर शिव को, दोनों बाहुओं पर केशव को, नाभि में ब्रह्मा को और दोनों जंघाओं में गणेश जी की स्थापना करे ॥ २० ॥

इसके पश्चात् निम्नलिखित चार मंत्रों से यथास्थान स्पर्श कर चारों देवताओं का ध्यान करना चाहिए—

ओं ह्रीं शिखास्थाने शङ्कराय नमः ।
ओं ह्रीं बाह्वोः केशवाय नमः ।
ओं ह्रीं नाभिमध्ये ब्रह्मणे नमः ।
ओं ह्रीं जङ्घयोर्गणपतये नमः ॥ २१ ॥

---

१. याचेत ।

ईदृशं कारयेद् न्यासं येन श्रेयो भविष्यति।
अन्येऽपि दुष्टमन्त्रेण न हिंसन्ति कदाचन ॥ २२ ॥
शिष्याय मानुषं चापं धनुर्मन्त्राभिमन्त्रितम्।
काण्डात् काण्डादिति[1] मन्त्रेण दद्याद्वेदविधानतः ॥ २३ ॥

## अथ वेधविधिः

प्रथमं पुष्पवेधं च फलहीनेन पत्रिणा।
ततः फलयुतेनैव मत्स्यवेधं च कारयेत् ॥ २४ ॥
एतैर्वेधैः कृतैः पुंसां शराः स्युः सर्वसाधकाः ॥ २५ ॥
वेधने चैव मांसस्य शरपातो यदा भवेत्।
पूर्वदिग्भागमाश्रित्य तदास्याद्विजयी सुखी ॥ २६ ॥

इस प्रकार अङ्गन्यास करना चाहिये जिससे कल्याण होगा। इस अङ्गन्यास के करने से दूसरे व्यक्ति भी मारण आदि दुष्ट मंत्रों के द्वारा उस शिष्य का अनिष्ट नहीं कर पायेंगे ॥ २२ ॥

गुरु अपने शिष्य को धनुर्वेदोक्त मंत्र से अभिमंत्रित करके, यजुर्वेद में उक्त 'काण्डात्काण्डादि' इस मन्त्र द्वारा विधि के अनुसार परिशोधन कर के मनुष्य के धारण योग्य ( मानुष ) धनुष को दे ॥ २३ ॥

## वेधविधि

इसके बाद सब से पहले शिष्य को ( गुरु की आज्ञा से ) फल रहित बाण द्वारा पुष्प पर वेध करना चाहिए अर्थात् फूल पर बाण चला कर उसका वेध करना चाहिए। इसके बाद फल युक्त बाण द्वारा मत्स्य वेध करना चाहिये। इस प्रकार पुष्पवेध, मत्स्यवेध और मांसवेध—ये तीन प्रकार के वेध होते हैं। इन तीनों प्रकार के वेध करने से धनुर्धर के बाण सर्व साधक हो जाते हैं। अर्थात् सब प्रकार के वेध करने में समर्थ हो जाते हैं ॥ २४–२५ ॥

मांस वेध करते समय बाण यदि पूर्व दिशा की ओर गिरे तो योद्धा को विजय लाभ और सुख मिलता है ॥ २६ ॥

---

१. काण्डात्काण्डात् प्ररोहन्ती परुषः परुषस्परि।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥
( यजुर्वेद अध्याय १३ मन्त्र २० )

दक्षिणे कलहो घोरो विदेशगमनं पुनः ।
पश्चिमे धनधान्यश्च सर्वञ्चैवोत्तरे शुभम् ॥ २७ ॥
ऐशान्यां पवनं दुष्टं विदिशोऽन्यांश्च शोभनाः ।
हर्षपुष्टिकराश्चैव सिद्धिदाः सर्वकर्म्मणि ॥ २८ ॥
एवं वेधत्रयङ्कुर्याच्छङ्खदुन्दुभि-निस्वनैः ।
ततः प्रणम्य गुरवे धनुर्बाणान्निवेदयेत् ॥ २९ ॥

## अथ चापप्रमाणम्

प्रथमं यौगिकं चापं युद्धचापं द्वितीयकम् ।
निजबाहुबलोन्मानात् किञ्चिदूनं शुभं धनुः ॥ ३० ॥
वरं प्राणाधिको धन्वी न तु प्राणाधिकं धनुः ।
धनुषा पीड्यमानस्तु धन्वी लक्ष्यं न पश्यति ॥ ३१ ॥

---

यदि बाण दक्षिण दिशा में गिरे तो घोर कलह और विदेश गमन होता है । पश्चिम की ओर गिरने से धन-धान्य की प्राप्ति होती है । उत्तर दिशा की ओर गिरने से शुभ होता है ॥ २७ ॥

ईशान कोण में बाण गिरने पर दुष्ट वायु बहती हैं । अन्य विदिशाओं ( कोणों ) में गिरने से शुभ ( उत्तम फल प्राप्त ) होता है । आनन्द और पुष्टिकर होता है और सब कार्य में सिद्धि प्राप्त होती है ॥२८॥

इस प्रकार शंख और दुन्दुभि बजा कर तीनों प्रकार का वेध करना चाहिये । उसके बाद गुरुदेव को प्रणाम कर धनुष-बाण उनके सम्मुख रख देना चाहिये । ( और गुरु दक्षिणा दे कर पुनः उसको ग्रहण करना चाहिये ) ॥ २९ ॥

## धनुष की माप

अभ्यास करते समय जो धनुष काम में लाया जाता है उसको 'यौगिक चाप' कहते हैं । दूसरे प्रकार के धनुष को 'युद्धचाप' कहते हैं । अपने बाहुबल से कुछ कम परिमाण ( वजन और माप ) का धनुष शुभ होता है ॥ ३० ॥

प्राण से भी अधिक प्रिय धनुर्धारी पुरुष होता है । धनुष प्राण से अधिक प्रिय नहीं होता है । ( इसलिए शक्ति के अनुरूप धनुष धारण करना चाहिये जिससे बाण को फेंकने ( चलाने ) में सुविधा हो ) । अपने ही धनुष से पीडित होने से धनुर्धारी अपने लक्ष्य को नहीं देख पाता है । इसलिए वह धनुष

अतो निजबलोन्मानं चापं स्याच्छुभकारकम् ।
देवानामुत्तमं चापं ततो न्यूनं च मानवम् ॥ ३२ ॥

अर्द्धपञ्चमहस्तन्तु श्रेष्ठं चापं प्रकीर्तितम् ।
तद्विज्ञेयं धनुर्दिव्यं शङ्करेण धृतं पुरा ॥ ३३ ॥

चतुर्वंशाङ्गुलो हस्तश्चतुर्हस्तं धनुः स्मृतम् ।
तद्भवेन्मानवं चापं सर्वलक्षणसंयुतम् ॥ ३४ ॥

## अथ शुभचापलक्षणम्

त्रिपर्वं पञ्चपर्वं वा सप्तपर्वं तथा पुनः ।
नव पर्वश्च कोदण्डं सर्वदा शुभकारकम् ॥ ३५ ॥
चतुष्पर्वञ्च षट्पर्वं अष्टपर्वं विवर्जयेत् ॥ ३६ ॥
केषाञ्चिच्च भवेच्चापं वितस्तिनवसम्मितम् ॥ ३७ ॥

---

क्षेपण और अपने धनुष का भार उठाने की चिन्ता से उद्विग्न हो कर विजय लाभ नहीं प्राप्त कर पाता है ॥ ३१ ॥

इस लिए अपनी शक्ति के अनुरूप वाला धनुष शुभकारक होता है । देवताओं का धनुष उत्तम होता है । मनुष्य का धनुष उससे कुछ छोटा होना चाहिए ॥ ३२ ॥

साढ़े पाँच हाथ का धनुष श्रेष्ठ कहा गया है । उसको दिव्य धनुष जानना चाहिये । प्राचीन काल में भगवान शिव ने इस प्रकार का धनुष धारण किया था ॥ ३३ ॥

चौबीस अंगुल का एक हाथ होता है । चार हाथ का एक धनुष होता है । यही चार हाथ का धनुष सब शुभ लक्षणों से युक्त होता है जो मनुष्य के लिए उपयोग योग्य होता है ॥ ३४ ॥

### शुभ धनुष का लक्षण

तीन पर्व ( गांठ ) पाँच पर्व, सात पर्व और नव पर्व वाला धनुष सर्वदा शुभकारक होता है ॥ ३५ ॥

चार, छः और आठ पर्व वाला धनुष प्रयोग के लिए वर्जित है ॥३६॥

किसी किसी के मतानुसार नव बीता ( बालिस्त ) अर्थात् साढ़े चार हाथ का धनुष होना चाहिये ॥ ३७ ॥

## अथ वर्जितधनुः

अतिजीर्णमपक्वञ्च ज्ञातिधृष्टन्तथैव च ।
दग्धं छिद्रं न कर्त्तव्यं बाह्याभ्यन्तरहस्तकम् ॥ ३८ ॥
गुणहीनं गुणाक्रान्तं काण्डदोषसमन्वितम् ।
गलग्रन्थि न कर्त्तव्यं तलमध्ये तथैव च ॥ ३९ ॥
अपक्वं भङ्गमायाति ह्यति जीर्णन्तु कर्कशम् ।
ज्ञातिधृष्टं तु सोद्वेगं कलहो बान्धवैः सह ॥ ४० ॥
दग्धेन दह्यते वेश्म छिद्रं युद्धविनाशकम् ।
बाह्ये लक्ष्यं न लभ्येत तथैवाभ्यन्तरेऽपि च ॥ ४१ ॥
हीने तु सन्धिते बाणे संग्रामे भङ्गकारकम् ।
आक्रान्ते तु पुनः क्वापि लक्ष्यं न प्राप्यते दृढम् ॥ ४२ ॥

## वर्जित धनु

बहुत पुराना, कच्चा और ज्ञाति द्वारा धृष्ट (ज्ञाति द्वारा विमर्दित या व्यवहृत अथवा अपर बाँस द्वारा घर्षित), दग्ध (जला हुआ), छेदहा (छिद्र युक्त), धनुष अच्छा नहीं होता है। खीचते समय हाथ बाहर ही रह जाय या अन्दर ही रह जाय ऐसा धनुष भी अच्छा नहीं होता है। तात्पर्य यह हैं कि शास्त्र द्वारा वर्जित धनुष को नहीं धारण करना चाहिए ॥३८॥

गुणहीन, गुणयुक्त, काण्ड-दोषयुक्त, गलग्रन्थि और तलग्रन्थि युक्त धनुष को त्याग देना चाहिए ॥ ३९ ॥

कच्चे बाँस का धनुष टूट जाता है। अति पुराने बाँस का धनुष कर्कश होता है। (अर्थात् उसमें उपयुक्त स्थिति स्थापक गुण नहीं होता है)। ज्ञाति धृष्ट अर्थात् ज्ञाति (अन्य बांस) के द्वारा धृष्ट रगड़ खाया हुआ या ज्ञातिजन अपने ही अन्य लोगों द्वारा व्यवहृत धनुष युद्ध के समय उद्वेग तथा बांधवों के साथ कलहकारी होता है। तात्पर्य यह है कि ऐसे धनुष से युद्ध नहीं जीता जा सकता ॥ ४० ॥

दग्ध (जले हुए) धनुष के धारण करने से गृह दाह (घर जल जाने) की संभावना रहती है। छिद्रयुक्त धनुष से युद्ध करने से युद्ध में हार हो जाती है या अधिक हानि उठानी पड़ती है। बाह्य हस्त और अन्तर्हस्त धनुष से लक्ष्य वेध में बाधा होती है। अर्थात् निशाना ठीक नहीं प्राप्त होता है ॥ ४१ ॥

गलग्रन्थि - तलग्रन्थि - धनहानिकरं धनुः ।
एभिर्दोषैर्विनिर्मुक्तं सर्वकार्य्यकरं स्मृतम् ॥ ४३ ॥
शार्ङ्गं पुनर्धनुर्दिव्यं विष्णोः परमायुधम् ।
वितस्तिसप्तमं मानं निर्म्मितं विश्वकर्मणा ॥ ४४ ॥
न स्वर्गे न च पाताले न भूमौ कस्यचित् करे ।
तद्धनुर्वशमायाति मुक्त्वैकं पुरुषोत्तमम् ॥ ४५ ॥
पौरुषेयं तु यच्छार्ङ्गं बहुवत्सरशोभितम् ।
वितस्तिभिर्सार्द्धषड्भिर्निर्म्मितं चार्थसाधनम् ॥ ४६ ॥
प्रायो योज्यं धनुः शार्ङ्गं गजारोहाश्वसादिनाम् ।
रथीनां च पदातीनां वांशं चापं प्रकीर्त्तितम् ॥ ४७ ॥
विश्वामित्र ! शृणुष्वाथ धनुर्द्रव्यत्रयं क्रमात् ।
लोहं शृङ्गञ्च काष्ठञ्च गदितं शम्भुना पुरा ॥ ४८ ॥

---

धनुष गुणहीन ( डोरी दोषयुक्त ) होने से वाण साधते समय भंग होने की संभावना रहती है । धनुष गुणाक्रान्त ( डोरी का भार धनुष के भार से अधिक) होने पर निर्धारित लक्ष्य का सही निशाना नहीं मिलता है।।४२।।

धनुष के गल या तल में ग्रन्थि ( गांठ ) होने से धन की हानि होती है । अतः जिस धनुष में ये सब दोष न हों वही धनुष सब कार्यों का साधक कहा गया है ॥ ४३ ॥

दिव्य शार्ङ्ग धनुष विष्णु भगवान् का परम अस्त्र है । यह सात वितस्ति (बीता या बालिस्त) का है । इसको विश्वकर्मा ने बनाया था ॥ ४४ ॥

यह धनुष विष्णु भगवान को छोड़कर स्वर्ग, पाताल या भूमि पर किसी भी व्यक्ति के द्वारा वश में नहीं आ सकता है ॥ ४५ ॥

जो धनुष मनुष्य निर्मित होता है वह अनेक वर्षों तक शोभित रहता है । यह साढे छः वितस्ति ( बीता, बालिस्त ) या साढ़े तीन हाथ का होता है । यह सब प्रकार के निशाने के लिए ठीक होता है ॥ ४६ ॥

यह शार्ङ्ग धनु प्रायः हाथीसवारों और घुड़सवारों द्वारा प्रयोग में लाया जाता है । रथारोहियों और पैदल सैनिकों के लिए बाँस से बनाया गया धनुष ही श्रेष्ठ होता है ॥ ४७ ॥

हे विश्वामित्र ! सुनो । धनुष तीन द्रव्यों ( पदार्थों ) लोहा, सींग और लकड़ी से बनाया जाता है । ऐसा प्राचीन काल में स्वयं भगवान शिव ने कहा था ॥ ४८ ॥

लोहानि स्वर्णरजतताम्रकृष्णायसानि ।
शृङ्गाणि महिषशरभरोहितानाम् ॥
शरभोऽष्टपाद् चतुरुर्द्धपादो महाविषाण-
उष्ट्रमितो वनस्थः काश्मीरदेशप्रसिद्धो मृगाख्यः ॥
दारूणि चन्दनवेत्रसाधावनशालशाल्मलिसाक-
ककुभवंशाञ्जनानाम् ॥ ४९ ॥

## अथ गुणलक्षणानि

गुणानां लक्षणं वक्ष्ये यादृशं कारयेद् गुणम् ।
पट्टसूत्रो गुणः कार्यः कनिष्ठामानसम्मितः ॥ ५० ॥
धनुः प्रमाणो निःसन्धिः शुद्धैस्त्रिगुणतन्तुभिः ।
वर्त्तितः स्याद्गुणः श्लक्ष्णः सर्वकर्म्मसहो युधि ॥ ५१ ॥
अभावे पट्टसूत्रस्य हरिणीस्नायुरिष्यते ।
गुणार्थमपि च ग्राह्या स्नायवो महिषीभवाः ॥ ५२ ॥



लोहा अर्थात् सोना, चाँदी, ताँबा और काला लोहा (इस्पात) शार्ङ्ग—भैंसा, शरभ और रोहित मृगों के सींगों से निर्मित । शरभ के आठ पैर होते हैं । चार पैर ऊपर की ओर और चार पैर नीचे की ओर । इसकी सींगे बड़ी होती हैं । ऊँट की तरह ऊँचा होता है । यह कश्मीर देश में प्रसिद्ध मृग है । लकड़ी से तात्पर्य चन्दन, बेत, साधा-वन ( विशेष वृक्ष ), शाल, शाल्मलि, साक ( सागोन वृक्ष ), ककुभ ( अर्जुन वृक्ष ), बाँस और अञ्जन वृक्ष से है ॥ ४९ ॥

### गुण के लक्षण

गुण ( प्रत्यञ्चा या धनुष की डोरी ) जैसी तैयार की जानी चाहिये इसका लक्षण बताता हूँ । यह सूत्र ( रेशम ) से कनिष्ठा के समान मोटी डोरी बनानी चाहिये ॥ ५० ॥

यह गुण ( डोरी ) धनुष के बराबर हो । उसमें कहीं भी जोड़ न हों । यह शुद्ध तीन तन्तुओं को एक साथ करके बटी हुई हो । पतली मोटी न होकर एक समान हो । मुलायम हो । ऐसी ही डोरी ( गुण ) युद्ध में सब प्रकार की क्रिया को सहन करने में सक्षम होती है ॥ ५१ ॥

पट्ट सूत्र ( रेशम ) के अभाव में हरिणी का स्नायु और भैंस का स्नायु गुण तैयार करने के लिए ग्राह्य होता है ॥ ५२ ॥

## अथास्त्रविधिः

एवं श्रमविधिं कुर्य्याद्यावद् सिद्धिः प्रजायते ।
श्रमे सिद्धे च वर्षासु नैव ग्राह्यं धनुष्करे ॥ ७१ ॥
पूर्वाभ्यासस्य शास्त्राणामविस्मरणहेतवे ।
मासद्वयं श्रमं कुर्य्यात् प्रतिवर्षं शरद्दतौ ॥ ७२ ॥
जाते वाश्वयुजिमासे नवमी देवतादिने ।
पूजयेदीश्वरीं चण्डीं गुरुं शास्त्राणि वाजिनः ॥ ७३ ॥
विप्रेभ्यो दक्षिणां दत्त्वा कुमारीः भोजयेत्ततः ।
देव्यै पशुबलिं दद्याद् भृतोवादित्रमङ्गलैः ॥ ७४ ॥
ततस्तु साधयेन्मन्त्रान् वेदोक्तान् आगमोदितान् ।
अस्त्राणां कर्म्मसिद्ध्यर्थं जपहोमविधानतः ॥ ७५ ॥

---

छोड़ना चाहिये । उसमें रक्षक नालिका लगी रहे तो वह बाण उस योद्धा के पास वापस आ जायगा ॥ ७० ॥

### अस्त्रविधि

इस प्रकार जब तक सिद्धि लाभ न हो तब तक लक्ष्यवेध का अभ्यास करते रहना चाहिये । सिद्धि लाभ हो जाने पर फिर वर्षा काल में हाथ में धनुष न धारण करना चाहिये ॥ ७१ ॥

श्रमपूर्वक दक्षता प्राप्त किया हुआ पूर्व अभ्यस्त शस्त्रज्ञान भूल न जाय, इसलिए प्रति वर्ष शरद् ऋतु में दो महीने श्रम ( अभ्यास ) करना चाहिये ॥ ७२ ॥

आश्विन ( कुआर ) मास के ·शुक्ल पक्ष में दुर्गा नवमी तिथि को चण्डी; ईश्वरी, गुरु, अस्त्र-शस्त्र और घोड़ों की पूजा करनी चाहिये ॥ ७३ ॥

उसके बाद ब्राह्मणों को दक्षिणा दे कर कुमारियों को भोजन कराना चाहिये । बाद्य और मंगलाचरणपूर्वक देवी के लिए पशु बलि देनी चाहिये ॥ ७४ ॥

उसके पश्चात् आगम शास्त्रोक्त और वेदोक्त मंत्रों की साधना करनी चाहिये तथा अस्त्रों को सिद्धि के लिए विधि-विधान के अनुसार जप और हवन आदि करना चाहिये ॥ ७५ ॥

ब्राह्मं नारायणं शैवमैन्द्रं वायव्यवारुणे ।
आग्नेयं चापरास्त्राणि गुरुदत्तानि साधयेत् ॥ ७६ ॥

मनोवाक्कर्म्मभिर्भाव्यं लब्धास्त्रेण शुचिष्मता ।
अपात्रमसमर्थञ्च दहन्त्यस्त्राणि पूरुषम् ॥ ७७ ॥
प्रयोगं चोपसंहारं यो वेत्ति स धनुर्द्धरः ।
सामान्ये कर्म्मणि प्राज्ञो नैवास्त्राणि प्रयोजयेत् ॥ ७८ ॥

## अथास्त्राणि

अथास्त्राणि प्रवक्ष्यामि सावधानोऽवधारय ।
ब्रह्मास्त्रं प्रथमं प्रोक्तं द्वितीयं ब्रह्मदण्डकम् ॥ ७९ ॥
ब्रह्मशिरस्तृतीयञ्च तुर्यं पाशुपतं मतम् ।
वायव्यं पञ्चमं प्रोक्तमाग्नेयं षष्ठकं स्मृतम् ॥ ८० ॥
नरसिंहं सप्तमञ्च तेषां भेदाह्यनन्तकाः ।
ससंहारं सविज्ञेयं शृणु गाधे ! यथातथम् ॥ ८१ ॥

---

ब्राह्म, नारायण, शैव, ऐन्द्र, वायव्य, वारुण, आग्नेय तथा गुरुदत्त ( गुरु द्वारा दिये गये ) अन्य अस्त्रों की साधना करनी चाहिये ॥ ७६ ॥

शस्त्रप्राप्त व्यक्ति को मन, वाणी और कर्म से पवित्र होना चाहिये । ये सब अस्त्र अपात्र और असमर्थ व्यक्ति को पीड़ा पहुंचाते हैं । ( अतः स्वयं अस्त्रों के धारण करने का पात्र बने और सामर्थ्य प्राप्त करे तथा अपात्र और असमर्थ व्यक्ति को अस्त्र ज्ञान न दे । ) ॥ ७७ ॥

जो व्यक्ति अस्त्रों के प्रयोग और अस्त्र संहार ( निरोध ) को जानता है वह धनुर्धर है । बुद्धिमान् व्यक्ति को सामान्य कार्य में कभी भी अस्त्रों का प्रयोग न करना चाहिये ॥ ७८ ॥

### अस्त्र

हे विश्वामित्र ! अब ध्यानपूर्वक सुनो । मैं अब अस्त्रों के विषय में बताऊँगा । प्रथम ब्रह्मास्त्र, द्वितीय ब्रह्मदण्डक, तृतीय ब्रह्मशिर, चतुर्थ पाशुपत, पञ्चम वायव्य, षष्ठ आग्नेय अस्त्र है ॥ ७९–८० ॥

सप्तम नरसिंह अस्त्र होता है । इन अस्त्रों के अनन्त भेद होते हैं । हे विश्वामित्र ! अस्त्र आदि जानने के लिए उसके साथ ही अस्त्र तत्त्व और

वेदमात्रा[1] सर्वशास्त्रं गृह्यते दीप्यतेऽथवा।
तत्प्रयोगं शृणु प्राज्ञ! ब्रह्मास्त्रं प्रथमं शृणु ॥ ८२॥

अथास्त्राणां मन्त्रसंस्कारः।

दादिदान्ताश्च[2] सावित्रीं विपरीतां जपेत् सुधीः।
जप्त्वा पूर्वां निखर्वञ्च त्वभिमन्त्र्य विधिवच्छरम् ॥
क्षिपेच्छत्रुषु सहसा नश्यन्ति सर्वजातयः।
बाला वृद्धाश्च गर्भस्था ये च योद्धुं समागताः ॥ ८३ ॥
सर्वे ते नाशमायन्ति मम चैव प्रसादतः।
यथातथं दादिदान्तं जपेत् संहार-सिद्धये ॥ ८४ ॥

अस्त्र निरोध ( संहार ) भी जानना चाहिये। वह भी अच्छी तरह सुनो ॥ ८१ ॥

हे प्राज्ञ ! इस तरह जानो कि सब अस्त्र-शस्त्र वेद मात्रा युक्त हैं। इनको जिस तरह ग्रहण करोगे उसी तरह कार्य में दीप्यमान होंगे। इन सब अस्त्रों के प्रयोग सुनो। इनमें से पहले ब्रह्मास्त्र के विषय में सुनो ॥ ८२ ॥

## अस्त्रों का मंत्र संस्कार

बुद्धिमान व्यक्ति को सर्वप्रथम 'द' आदि से 'द' अन्त तक विपरीत सावित्री ( गायत्री ) का विधि से जप करना चाहिये। दस खरब संख्या तक जप कर के विधिपूर्वक बाणों को अभिमंत्रित करके शत्रुओं पर सहसा छोड़ना चाहिये। उसके प्रहार से सब जातियाँ नष्ट हो जाती हैं। बालक, वृद्ध, गर्भस्थ शिशु या जो लोग युद्ध करने के लिए आये हुए हों वे सब मेरी ( शिव जी ) कृपा से नाश को प्राप्त होते हैं। उस ब्रह्मास्त्र के संहार ( निरोध ) की सिद्धि के लिए पूर्व प्रकार से 'द' आदि 'द' अन्त सावित्री का जप करना चाहिये ॥ ८३-८४ ॥

---

१. वेद मात्रा अर्थात् वैदिक प्रमाण द्वारा प्रमाणित। चार मात्रा, अथवा वेद मात्रा-गायत्री मंत्र, सब मन्त्रों का प्रकाशक और सब शाखा प्रदीपक; इसके द्वारा पवित्र करके अस्त्र प्रयोग करने से अनायास शत्रु का संहार होता है।

२. ॐ देवस्यधीमहि धियो यो नः प्रचोदयात् तत्सवितुर्वरेण्यं भर्गोदे।

ब्रह्मदण्डं[1] प्रवक्ष्यामि प्रणवं पूर्वमुच्चरेत् ।
ततः प्रचोदयाज् ज्ञेयं ततो नो यो धियः क्रमात् ॥
ततो धीमहि देवस्य ततो भर्गो वरेण्यम् ।
सवितुस्तच्च योक्तव्यममुकशत्रुं तथैव च ॥ ८५ ॥

ततो 'हन हन हुं फट्' जप्त्वा पूर्वं द्विलक्षकम् ।
अभिमन्त्र्य शरं तद्वत् प्रक्षिपेच्छत्रुषु स्फुटम् ॥ ८६ ॥

नश्यन्ति शत्रवः सर्वे यमतुल्या अपि ध्रुवम् ।
एतदेव विपर्यस्तं जपेत् संहारसिद्धये ॥ ८७ ॥

ब्रह्मशिरः[2] प्रवक्ष्यामि प्रणवं पूर्वमुच्चरेत् ।
'धियो यो नः प्रचोदयात्' 'भर्गो देवस्य धीमहि'
'तत्सवितुर्वरेण्यम्' शत्रून्मे हन हनेति च ॥ ८८ ॥

---

अब ब्रह्मदण्ड अस्त्र के विषय में कहूँगा । इसके प्रयोग में पहले 'ॐ' प्रणव का उच्चारण करना चाहिये । उसके पश्चात् ॐ 'प्रचोदयात्' उसके बाद 'नो यो धियः' 'धीमहि देवस्य' भर्गोवरेण्यम्' 'सवितुः' इसके साथ इस प्रकार 'अमुकशत्रुं' जोड़ कर उच्चारण करना चाहिये ।। ८५ ।।

उसके बाद हन हन हुं फट् यह दो लाख बार जप कर तथा बाण को अभिमंत्रित करके शत्रु के ऊपर बाण छोड़ना चाहिये ।। ८६ ।।

यम के समान बलवान् शत्रु भी इससे निश्चय ही विनाश को प्राप्त हो जाते हैं । बाण की संहार सिद्धि के लिए इसी को उल्टी विधि से जपना चाहिये ।। ८७ ।।

अब ब्रह्मशिर अस्त्र के विषय में कहता है । सर्वप्रथम प्रणव ( ॐ ) का उच्चारण करना चाहिये । 'उसके बाद' धियो यो नः प्रचोदयात्' भर्गोदेवस्य धीमहि 'तत्सवितुर्वरेण्यम् शत्रुन् मे हन हनेति' यह वाक्य उच्चारण करना चाहिये ।। ८८ ।।

---

१. 'ॐ' प्रचोदयात् नो यो धियः धीमहि देवस्य भर्गो वरेण्यं सवितुः तत् अमुकशत्रुं हन हन हुं फट् ।

२. ॐ धियो यो नः प्रचोदयात् भर्गो देवस्य धीमहि तत्सवितुर्वरेण्यं शत्रून्मे हन हन हुं फट् ।

'हुं फट्' चैवप्रयोक्तव्यं क्षिपेद् ब्रह्मशिरस्ततः ।
पुरश्चर्यां पुरस्कृत्वा त्रिलक्षं नियतः शुचिः ॥ ८९ ॥
नश्यन्ति सर्वे रिपवः सर्वे देवासुरा अपि ।
इदमेव प्रयोक्तव्यः विपर्यस्तं विकर्षणे ॥ ९० ॥

## पाशुपतास्त्रम्

अतः परं प्रवक्ष्यामि चास्त्रं पाशुपतन्तव ।
यस्य विज्ञानमात्रेण नश्यन्ति सर्वशत्रवः ॥ ९१ ॥
दादिदान्तां च सावित्रीं प्रोच्य प्रणवमेव च ।
'श्लीं पशुं हुं फट्[1] 'अमुकशत्रून् हन हन हुं फट् ॥९२॥
जप्त्वा पूर्वं द्विलक्षञ्च ततः पाशुपतं[1] क्षिपेत् ।
पुनस्तदेव व्यस्तं स्यात् संहारे तां नियोजयेत् ॥
एतत् पाशुपतं चास्त्रं सर्वशत्रुनिवारणम् ॥ ९३ ॥

इस वाक्य के साथ 'हुं फट्' इस शब्द को भी जोड़ना चाहिये । तत्पश्चात् ब्रह्मशिरः अस्त्र को छोड़ना चाहिये । तीन लाख बार पुरश्चरण करके एवं पवित्र हो कर यह बाण छोड़ने पर सब देवता हों, राक्षस हों या अन्य शत्रु हों सब नाश को प्राप्त होते हैं । इस अस्त्र के निरोध ( संवरण ) के लिए उल्टी विधि से पूर्वोक्त मंत्र का जप करना चाहिये ॥ ९० ॥

### पाशुपत अस्त्र

अब मैं तुमको पाशुपत अस्त्र के विषय में बताऊँगा जिसके विषय में पूर्ण ज्ञान होने पर शत्रु नष्ट हो जाते हैं ॥ ९१ ॥

'द' आदि और 'द' अन्त में करके सावित्री और प्रणव का उच्चारण करके 'श्लीं पशुं हुं फट् 'अमुक शत्रून् हन हन हुं फट्' यह वाक्य दो लाख बार जप करके तब शत्रु के ऊपर पाशुपत अस्त्र को छोड़ना चाहिये । इस अस्त्र के निरोध ( संहरण ) के लिए इस मंत्र को उल्टी विधि से जपना चाहिये । यह पाशुपतास्त्र सब शत्रुओं से रक्षा करने और उन शत्रुओं का विनाश करने में समर्थ है ॥ ९२-९३ ॥

---

पाशुपत

१. ॐ देवस्य धीमहि धियो यो नः प्रचोदयात् तत्सवितुर्वरेण्यं भर्गोदे ॐ श्लीं पशुं हुं फट् अमुकं शत्रुं हन हन हुं फट् ।

वच्मि वायव्यमस्त्रं[1] ते येन नश्यन्ति शत्रवः।
ओं वायव्यया या वायव्ययान्योर्वाय या वा तथा।
अमुकशत्रुम् हन हन हुं फट् चैव प्रकीर्त्तयेत्।
पूर्वमेव तथा जप्त्वा नियुतं द्वितयन्तथा ॥ ९४ ॥
पुनः संहाररूपेण संहारं च प्रकल्पयेत्।
अस्त्रं वायव्यकं नाम देवानामपि वारणम् ॥ ९५ ॥
आग्नेयं[2] सम्प्रवक्ष्यामि यतः परभयं दहेत्।
ओमग्निस्त्यता हृद्भूश्च शिवं वनाश्वाविणि च।
हगादशरूपनः सद वे ति ततः क्रमात्।
हादति तोयति राम तथा मसो हित्वा वा न ॥ ९६ ॥
सुसेदवेदया च वदेत्। अमुकादींस्ततो वदेत्।
पूर्वोक्तांश्च पुरश्चर्यां कृत्वा शस्त्रेभियोजयेत्।
इमं मन्त्रं पुनर्व्यस्तं संहारे चैव योजयेत् ॥ ९७ ॥

---

अब मैं तुम से वायव्य अस्त्र बताऊँगा जिससे सब शत्रु नष्ट हो जाते हैं। वायव्य या आदि मन्त्र मे 'अमुकं मे शत्रुं हन हन हुं फट्' यह मन्त्र उच्चारण करना चाहिये। दो लाख बार जप करके तब इस संहारक अस्त्र द्वारा शत्रु पर संहार करना चाहिये। यह वायव्य नामक अस्त्र युद्ध क्षेत्र में देवताओं को भी पराजित कर देता है ॥ ९४–९५ ॥

अब आग्नेयास्त्र के विषय में आप को बताता हूँ जिससे शत्रु-भय समूल नष्ट हो जाता है। 'ॐ अग्निस्त्यता हृद्भू शिवं वनाश्विविणि च। हगादशरूपनः सदवा हादति तोयति राममसो हित्वा वान! सुसेदवेदया च वदेत्' इस मन्त्र का पहले उच्चारण करे। उसके बाद 'अमुकशत्रून् हन हन हुं फट् इति' इस वाक्य को पहले वाले वाक्य के साथ जोड़कर इस मंत्र का दो लाख जप कर तब शस्त्र ( बाण ) को अभिमंत्रित करना चाहिये। बाण के संहरण के लिए इस मंत्र को उल्टी विधि से जपना चाहिये ॥ ९६-९७ ॥

---

१. ॐ वायव्यया या वायव्ययान्योर्वायया वा अमुकं मे शत्रुं हन हन हुं फट्।

२. ॐ अग्निस्त्यता हृदुभूं शिवं वनाश्विविणि हगादशंरूपनः सदवा हादति तोयति राममसो हित्वा वान सुसेद वेदयाऽमुकं शत्रुं मे हन हन हुँ फट्।

'ॐ' वज्रनखवज्रदंष्ट्रायुधाय महासिंहाय हुं फट्'
पूर्वं जप्त्वा च लक्षं हि नरसिंहञ्च योजयेत् ।
सिंहरूपास्ततो बाणा पतन्ति शात्रवे वने ॥ ९८ ॥

पूर्वोक्तेन प्रकारेण संहारञ्च प्रकल्पयेत् ।
संक्षेपतो महाभाग ! तवोक्तानि महामते ! ।
भेदास्तेषां शिवेनैव ह्यनन्ताः परिकीर्त्तिताः ॥ ९९ ॥

इत्यस्त्रप्रकरणम्

---

'ॐ वज्रनखवज्रदंष्ट्रायुधाय महासिंहाय हुं फट्' यह मंत्र पहले एक लाख जप करके श्रीनरसिंह का ध्यान करके तब बाण चलाना चाहिये । ये सिंहरूप बाण शत्रु समूह रूपी बन में गिरते हैं और उनको नष्ट कर देते हैं । संहार के लिए पूर्वोक्त विधि से उल्टा जप करना चाहिये । हे महाभाग ! हे बुद्धिमान् विश्वामित्र जी ! मैंने संक्षेप में तुमसे अस्त्रों के विषय में कहा । भगवान् शिव द्वारा इन शस्त्रों के अनन्त भेद बताये गये हैं ।

इति अस्त्रप्रकरण समाप्त

## अथौषधिः

हस्तार्के लाङ्गलीकन्दं गृहीतस्तस्य लेपतः ।
शूरस्यापि रणे पुंसो दर्पं हरति कातरः ॥ १ ॥

गृहीत्वा योगनक्षत्रैरपामार्गस्य मूलकम् ।
लेपमात्रेण वीराणां सर्वशस्त्रनिवारणम् ॥ २ ॥

अधः पुष्पी[1] शङ्खपुष्पी[2] लज्जालु[3] गिरिकर्णिका[4] ।
नलिनी[5] सहदेवी[6] च पत्रमोश्चार्कयोस्तथा ॥ ३ ॥

विष्णुकान्ता[7] च सर्वासां जटा ग्राह्या रवेर्दिने ।
बद्धा भुजे विलेपाद्वा काये शस्त्रापवारकाः ॥ ४ ॥

---

### औषधि वर्णन

हस्त नक्षत्र युक्त रविवार को लांगली कन्द (जलपीपल की जड़) ले कर रख ले । कायर पुरुष भी यदि उसको पीस कर (अपने शरीर में) लेप करके श्रेष्ठ वीर से भी बाण युद्ध करे तो वह रण में उस वीर का भी घमंड चूर कर सकता है ॥ १ ॥

पुष्य नक्षत्र में रविवार सिद्ध योग में अपामार्ग ( चिरायता ) की जड़ ले कर रखें और उसका लेप पूरे शरीर में करने से वीरों के द्वारा चलाये गये सब प्रकार के अस्त्र व्यर्थ हो जाते हैं ॥ २ ॥

अधः पुष्पी, शंखपुष्पी, लज्जालु, गिरिकर्णिका, ( अपराजिता ), नलिनी, सहदेवी, मुञ्चपत्र, अर्कपत्र, विष्णुकान्ता ( नील अपराजिता ) आदि वृक्षों की जटा का (मूल) रविवार के दिन ग्रहण करके रख ले । उसको भुजा पर बांधने या शरीर पर लेप करने से शरीर पर शत्रु के समस्त अस्त्र-शस्त्र निष्फल हो जाते हैं ॥ ३–४ ॥

---

१. अधः पुष्पी ( औंधाहूली )
२. शङ्ख पुष्पी ( श्वेत पुष्पी )
३. लज्जालु ( लजाधुर )
४. गिरिकर्णिका ( अपराजिता )
५. नलिनी ( कमलिनी )
६. सहदेवी ( सहदेई )
७. विष्णुकान्ता ( नीलपुष्पी )

सर्पव्याघ्रादिसत्त्वानां भूतादीनां न जायते ।
भीतिस्तस्य स्थिता यस्य मातरोऽष्टौ[1] शरीरके ॥ ५ ॥

गृहीतं हस्तनक्षत्रे चूर्णं छुच्छुन्दरी[2] भवम् ।
तत्प्रभावाद्गजः पुंसः सम्मुखं नैति निश्चितम् ॥ ६ ॥

हरिमांसं गृहीत्वा च मार्गेऽश्वानां क्षिपेद्भुवि ।
तेन मार्गेण ते चाश्वा नायान्ति ताडनेन वै ॥ ७ ॥

छुच्छुन्दरीश्रीफलपुष्पचूर्णैरालिप्तगात्रस्य नरस्य दूरात् ।
आघ्राय गन्धं द्विरदोऽतिमत्तो मदं त्यजेत् केसरिणो यथोग्रम् ॥ ८ ॥

श्वेताद्रिकर्णिका[3] मूलं पाणिस्थं वारयेद्गजम् ।
श्वेतकण्टारिकामूलं[4] व्याघ्रादीनां भयं हरेत् ॥ ९ ॥

जिसके शरीर पर अष्ट माताएँ-स्थित रहती हैं उसको सर्प, व्याघ्र आदि हिंसक जन्तुओं से किसी प्रकार का कोई भय नहीं रहता है ॥ ५ ॥

हस्त नक्षत्र में छुच्छुन्दरी ( सुनसुनी ) वृक्ष का चूर्ण बना कर रख ले । उस चूर्ण के पास में रहने पर उसके प्रभाव से हाथी भी पास नहीं आता है । यह निश्चित है ॥ ६ ॥

हरि ( सिंह, व्याघ्र, शृगाल ) के मांस को ले कर घोड़ा के आने जाने के मार्ग में फेंक देने से घोड़े मारने पर भी उस मार्ग से नहीं आते हैं ॥ ७ ॥

छुच्छुन्दरी और श्रीफल पुष्प के चूर्णों ( केसर ) का शरीर पर लेप कर लेने वाले व्यक्ति के शरीर की गंध को सूंघ कर मदमस्त हाथी भी अपनी मदमत्तता को छोड़ देता है ॥ ८ ॥

श्वेत गिरिकर्णिका[2] की जड़ हाथ में रखने से वह हाथी को रोक देता है । श्वेत कंटारिका[3] की जड़ व्याघ्र आदि के भय को दूर करती है ॥ ९ ॥

---

१. ब्राह्मी माहेश्वरी चैन्द्री बास ही वैष्णवी तथा ।
कौमारीत्यपि चामुण्डा चर्चिकेत्यष्टमातरः ॥ ( मंत्रशास्त्र )

२. छुच्छुन्दरी ( केवांच )

३. श्वेतगिरिकर्णिका ( सफेद बनमोगरा )

४. श्वेतकण्टारिका ( सफेद भटकटैया )

पुष्यार्कोत्पाटिते मूले पाठाया:[1] मुखसंस्थिते ।
देहं स्फुरति नो तीक्ष्णमण्डलाग्रै रणे नृणाम् ॥ १० ॥
गान्धार्य्या उत्तरं मूलं मुखस्थं सन्मुखागतम् ।
शस्त्रौघं वारयेत्तत्र पुष्यार्के विधिनोद्धृतम् ॥ ११ ॥

## अथ विधिरुपवासः

शुभ्राया: परपुङ्खाया[2] जटनीली जटाथवा ।
भुजे शिरसि वक्त्रे वा स्थिता शस्त्रनिवारिका ॥
भूपाहिचोरभीतिघ्नी गृहीता पुष्यभास्करे ॥ १२ ॥

## अथ संग्रामविधिः

आदौ तु क्रियते मुद्रा पश्चाद्युद्धं समाचरेत् ।
सर्पमुद्रा कृता येन तस्य सिद्धिर्न संशयः ॥ १३ ॥

---

पुष्य नक्षत्र रविवार को पाठा[1] (बृद्धकर्णी) की उखाड़ी हुई जड़ को मुख में रख लेने पर युद्ध में तेज तलवार या चक्र धार द्वारा भी योद्धा का शरीर नहीं कटता है ॥ १० ॥

पुष्य नक्षत्र रविवार को विधिपूर्वक गांधारी ( वमास, गाम्भी का पेड़ ) के उत्तर की ओर का मूल उखाड़ कर रख ले । उसको मुंह में रखने पर वह सम्मुख आने वाले शस्त्र को रोक देता है ॥ ११ ॥

## उपवासपूर्वकविधि

पुष्य नक्षत्र रविवार को उपवास कर के ली गई सफेद परपुंखा[2] का मूल अथवा जटामांसी या जटानीली का मूल भुजा पर या सिर पर बांधने या मुख में रखने से शत्रुओं द्वारा चलाये गये सब अस्त्र-शस्त्रों का निवारण होता है तथा राजभय, सर्पभय और चोरभय को नष्ट करता है ॥ १२ ॥

## संग्राम विधि

संग्राम करने के लिए रण-क्षेत्र में उपस्थित होने पर शत्रु सेना के सामने स्थिर होकर पहले मुद्रा करनी चाहिये । उसके पश्चात् युद्धारम्भ करना चाहिये ।;जो सर्वप्रथम सर्प मुद्रा करता है युद्ध में उसकी विजय निश्चित रूप में होती है ॥ १३ ॥

---

१. पाठा ( पाढ ) २. परपुङ्खा ( शरफों )

श्री रुद्रं ध्यात्वा तन्मन्त्रं जपेत् ।

ओं नमः परमात्मने सर्वशक्तिमते विरूपाक्षाय भालनेत्राय रं हुं फट् स्वाहा। ततो हैमवतीं ( दुर्गां ) ध्यात्वा प्रणम्य युद्धमारभेत्। ओं ह्रीं श्रीं हैमवतीश्वरीं ह्रीं स्वाहा। ओं ह्रीं वज्रयोगिन्यै स्वाहा। सिंहासनस्थां रुद्राणीं ध्यायेत् ॥ १४ ॥

अपूर्णशत्रुसामग्री पूर्णे वै स्वबलन्तथा।
कुरुते पूर्णसत्वस्थो जयत्येको वसुन्धराम् ॥ १५ ॥

पृष्ठे दक्षे योगिनी राहुयुक्ता
यस्यैकोऽयं शत्रुलक्षं निहन्ति।
अर्कः पृष्ठे दक्षिणे यस्य गाधे !
चन्द्रे वामे सन्मुखे वै निशायाम् ॥

वायु पृष्ठे दक्षिणे यो विदध्यात्।
योधा शत्रून् नाशयेत्तत्क्षणेन ॥ १६ ॥

---

### रुद्र का ध्यान करके मन्त्र जपना

रुद्र देव का ध्यान करके 'ॐ नमः परमात्मने सर्वशक्तिमते विरूपाक्षाय भालनेत्राय रं हुँ फट् स्वाहा।' इस मंत्र का जप करना चाहिये। उसके पश्चात् हैमवती दुर्गा देवी का ध्यान प्रणाम करके युद्ध प्रारंभ करना चाहिये। ओं ह्रीं श्रीं हैमवतीश्वरी ह्रीं स्वाहा। 'ओं' ह्रीं वज्रयोगिन्यै स्वाहा। इस मंत्र से सिंह पर सवार रुद्राणी का ध्यान करना चाहिये ॥ १४ ॥

अपूर्ण स्वर द्वारा योधा अपने शत्रु की सामग्री हो जाता है। किन्तु पूर्ण स्वर द्वारा वह अपनी सेना सहित ( स्वर तत्त्व द्वारा ) अशेष बलयुक्त हो जाता है। इस प्रकार की अवस्था में पूर्ण शक्तिमान एक ही योद्धा सम्पूर्ण पृथ्वी को जीत सकता है ॥ १५ ॥

हे विश्वामित्र ! जिस योद्धा के पृष्ठ भाग में और दक्षिण भाग में (पीछे और दाहिने ) राहुयुक्त योगिनी हो वह अकेले ही एक लाख शत्रु को मार सकता है। इसी प्रकार जिस योद्धा के पीछे और दाहिने सूर्य हो या रात्रि के समय चन्द्रमा सामने या बायीं ओर रहे जो वायु को पीछे या दाहिने ओर करे तो वह योद्धा शत्रुओं को तुरन्त नष्ट कर सकता है ॥ १६ ॥

या नाडी वहते चाङ्गे तस्यामेवाधिदेवता ।
सन्मुखेऽपि दिशा तेषां सर्वकार्य्यफलप्रदा ॥ १७ ॥
यां दिशं वहते वायुर्युद्धं तद्दिशि दापयेत् ।
जयत्येव न सन्देहः शक्रोऽपि यदि चाग्रतः ॥ १८ ॥
सूर्ये पूर्वे चोत्तरे च चन्द्रे पश्चिमदक्षिणे ।
सेनापतिबलं त्वेवं प्रेषयेन्नित्यमादरात् ॥ १९ ॥
यत्र नाड्यां वहेद् वायुस्तदङ्गे प्राणमेव च ।
आकृष्य गच्छेत् कर्णान्तं जयत्येव पुरन्दरम् ॥ २० ॥
प्रतिपक्षप्रहारेभ्यः पूर्णाङ्गं योऽभिरक्षति ।
न तस्य रिपुभिः शक्तिर्बलिष्ठैरपि हन्यते ॥ २१ ॥
अङ्गुष्ठतर्जनीवंशे पादाङ्गुष्ठे तथा ध्वनिः ।
युद्धकाले च कर्त्तव्यो लक्षयोधाजयी भवेत् ॥ २२ ॥

---

जो नाड़ी शरीर में चल रही है उसमें उस नाड़ी की अधिष्ठात्री देवता सामने रहती है। सामने उस ओर सामने का भाग करने से वह नाड़ी सब कार्यों में सफलता देने वाली होती है ॥ १७ ॥

जिस ओर से वायु शरीर की ओर बह रहा हो उस 'दिशा की ओर मुँह करके युद्ध करना चाहिये। ऐसा करने से यदि इन्द्र देवता भी सम्मुख होकर युद्ध करें तो भी योद्धा निश्चय ही युद्ध में विजयी होता है ॥ १८ ॥

यदि सूर्य योद्धा के पूर्व या पश्चिम रहे एवं चन्द्रमा यदि पश्चिम या दक्षिण रहे तो सेनापति को अपनी सेना युद्ध में ( बिना किसी झिझक के ) आदरपूर्वक युद्ध के लिए भेजनी चाहिये ॥ १९ ॥

जिस नाड़ी में वायु प्रवाहित हो उसके अंग में प्राण रहता है एवं उसको कान तक धनुष की डोरी खींच योद्धा को बाण छोड़ने से उससे इन्द्र को भी जीता जा सकता है ॥ २० ॥

जो योद्धा शत्रुओं के प्रहारों से अपने सम्पूर्ण अंगों ( पूरे शरीर ) की रक्षा करता है बलवान शत्रुओं द्वारा भी उसकी शक्ति नष्ट नहीं की जा सकती ( मारा नहीं जा सकता ) ॥ २१ ॥

युद्ध काल में अंगूठे और तर्जनी के आगे भाग में एवं पैर के अँगूठे के अग्रभाग में ध्वनि ( आवाज ) करनी चाहिये। ऐसा करने से योद्धा लाख योद्धाओं को जीतने में समर्थ होता है ॥ २२ ॥

भूतत्त्वे ह्युदरं रक्षेत् पादौ रक्षेज्जलेन च।
ऊरूश्च वह्नितत्त्वेन करौ रक्षेच्च वायुना ॥ २३ ॥
सूर्य्ये पूर्वे चोत्तरे च मुखं कृत्वा जयेन्नरः।
चन्द्रे मुखं सदा कुर्याद्दक्षिणे पश्चिमे सुधीः ॥ २४ ॥
चिरयुद्धे शुभश्चन्द्रः शीघ्रयुद्धे रविस्तथा।
दूर युद्धे जयी चन्द्रः समीपस्थे दिवाकरः ॥ २५ ॥
आकृष्य प्राणपवनं समारोहेच्च वाहनम्।
समुत्तरेत् पदं दद्यात् सर्वकार्याणि साधयेत् ॥ २६ ॥
न कालो विविधं घोरं न शस्त्रं न च पन्नगाः।
न शत्रुव्याधिचौराद्याशून्यस्थान्नाशितुं क्षमाः ॥ २७ ॥

---

जब भी योद्धा पृथ्वी तत्त्वविद् होगा तभी उसके उदर में चोट लगेगी। अतः पृथ्वी तत्त्वविद् योद्धा को ढाल आदि के द्वारा अपने उदर की रक्षा करनी चाहिये। इसी प्रकार जल तत्त्वविद् योद्धा को दोनों पैरों की रक्षा करनी चाहिये। अग्नि तत्त्वविद् योद्धा को दोनों जांघों की एवं वायु तत्त्व-विद् योद्धा को दोनों हाथों की तथा आकाश तत्त्वविद् योद्धा को मस्तक की रक्षा करनी चाहिये (ऐसा करने से योद्धा विजयी होता है) ॥ २३ ॥

योद्धा सूर्य के पूर्व और उत्तर की ओर मुख करके विजय लाभ प्राप्त करता है। बुद्धिमान को चाहिये कि वह चन्द्रमा के दक्षिण और पश्चिम की ओर मुख करके विजय लाभ प्राप्त करे ॥ २४ ॥

चन्द्रमा शुभ हो तो बहुत काल तक युद्ध होता है। सूर्य शुभ हो तो युद्ध शीघ्र समाप्त होता है। दूर युद्ध में चंद्रमा विजय लाभ दिलाता है एवं समीप युद्ध में सूर्य विजयी होता है ॥ २५ ॥

प्राण वायु को कुम्भक द्वारा खींचकर वाहन के ऊपर चढ़ना चाहिये। प्राण वायु को (रेचक द्वारा) छोड़ कर तब बाहन से नीचे पैर रखना चाहिये। इस प्रकार की क्रियाओं द्वारा सब प्रकार के कार्यों की सिद्धि होती हैं ॥ २६ ॥

जो व्यक्ति स्वरशास्त्र के अनुसार शून्य स्वर में प्रयाण करता है उसको अशुभ काल, विभिन्न प्रकार के घोर शस्त्र, सर्प, शत्रु, व्याधि और चोर आदि दुष्ट लोग विनाश करने में समर्थ नहीं होते हैं ॥ २७ ॥

अयनतिथिदिनैशैः स्वीयतत्त्वेऽध्व (च्छ) युक्तो
यदि वहति कदाचिद्दैवयोगेन पुंसाम्।
स जयति रिपुसैन्यं स्तम्भमात्रस्वरेण,
प्रभवति न च विघ्नं केशवस्यापि लोके ॥ २८ ॥
जीवेन शस्त्रं बध्नीयाज् जीवेनैव विकासयेत्।
जीवेन प्रक्षिपेच्छस्त्रं युद्धे जयति सर्वदा ॥ २९ ॥
वामनाड्युदये चन्द्रः कर्त्तव्यो वामसन्मुखः।
सूर्य्यचारे तथा सूर्य्यः पृष्ठे दक्षिणगो जयेत् ॥ ३० ॥
दीप्ते कार्य्यै नाड़ी परिदिशि जीविता सदा कुर्य्यात्।
शान्ते च जीवसहितात्वेवं सिद्ध्यन्ति कार्य्याणि ॥ ३१ ॥
तत्त्वबलान्नाडीबलमधिकं प्रोक्तं कपर्दिना नियतम्।
ज्ञात्वैनं स्वरचारं नरो भवेत् कार्यनिपुणमतिः ॥ ३२ ॥

---

दैव योग से सूर्य की तिथि-( उत्तरायण ) अपने तत्त्व ( सूर्य स्वर, अग्नि तत्त्व या वायु तत्त्व से युक्त होने पर ) यदि सैनिक ( बायें ओर के स्वर-प्रवाह में ) युद्ध करने के लिए जाते हुये तत्काल स्वर-स्तम्भन कर शस्त्र चलावे तो वह शत्रु सेना को जीतता है एवं वैकुंठ लोक में भी उसके सामने कोई विघ्न टिक नहीं सकता है ॥ २८ ॥

स्वर द्वारा शस्त्र को बाँधना चाहिये। स्वर द्वारा ही शस्त्र का विकास करना चाहिये। स्वर द्वारा शस्त्रों का प्रक्षेपण करना चाहिये। इससे युद्ध में व्यक्ति की सदा जीत होती है ॥ २९ ॥

बायें ओर स्वर हो ( स्वर के उदय होने पर ) अर्थात् जब बाईं ओर स्वर चले तो चंद्रमा को बायें या सम्मुख करना चाहिये। सूर्य भ्रमण के समय उसी प्रकार सूर्य को पृष्ठ की ओर या दक्षिण की ओर करना चाहिये ॥ ३० ॥

क्रूर कार्य में नाड़ी को सदा दूसरी दिशा में जीवित रखना चाहिये। शान्त कार्य में नाड़ी के भ्राम्यमान ( जीवित ) रहने से सब कार्य सिद्ध होते हैं ॥ ३१ ॥

तत्त्व ज्ञान के बल से नाड़ी बल अधिक होता है। इस तथ्य को भगवान् शिव ने स्वयं ( परशुराम से ) कहा था। स्वरों का संचार ( गति ) जान कर मनुष्य सदा कार्य करने में कुशल होता है ॥ ३२ ॥

न देयमिति क्रूराय कुबुद्धयेऽशान्ताय
गुरुद्रोहिणेऽभक्तायेति । देयमिति ब्रह्मचारिणे ।
धर्म्मतः प्रजापाल-दुष्टदण्डविधारिणे साधु-
संरक्षकाय इत्येवं प्रवचनं प्रवचनमिति ॥ ३३ ॥

इस युद्ध की शिक्षा कुबुद्धि, अशान्त, गुरुद्रोही और अभक्त व्यक्ति को न देनी चाहिये । ब्रह्मचारी, धर्मानुसार प्रजापालक और दुष्टों को दण्ड देने वाले, साधु-सज्जनों के रक्षक व्यक्ति को इस बल युद्ध का, ज्ञान अवश्य देना चाहिये ॥ ३३ ॥

## अथ राहुयुक्ता योगिनीबलयुद्धं व्याख्यास्यामः

प्रतिपन्नवम्यां प्रथमेऽर्द्धयामे राहु-
युक्ता योगिनी पूर्वस्यां दिशि स्थिता भवति ॥ १ ॥

द्वितीया—दशम्यां पञ्चमेऽर्द्धयामे राहु-
सहिता शिवा प्रतीच्यामुदेति ॥ २ ॥

तृतीयैकादश्यां तृतीयेऽर्द्धयामे तमः
संमिलिता पार्वती याम्यां परिभ्रमति ॥ ३ ॥

चतुर्थ्यां द्वादश्यां तु सप्तमेऽर्द्धयामे राहुना
सह नगजा चोत्तरे ज्ञेया ॥ ४ ॥

पञ्चम्यामथ त्रयोदश्यामष्टमे ऽर्द्धयामे
स्वर्भानुयुता गौरी नैऋत्यामटति ॥ ५ ॥

गुहतिथौ चतुर्दश्यां च कात्यायनी
पवनालये चायाति ॥ ६ ॥

---

**अब राहुयुक्त योगिनी की दृष्टि से युद्ध की व्याख्या करेंगे ।**

प्रतिपदा और नवमी तिथि के प्रथम अर्द्ध प्रहर में राहुयुक्त योगिनी पूर्व दिशा में स्थित रहती है ।। १ ।।

द्वितीया और दशमी तिथि के पंचमार्ध याम में राहुयुक्त योगिनी पश्चिम की ओर उदित होती है ।। २ ।।

तृतीया और एकादशी तिथि के तृतीयार्ध प्रहर में राहुयुक्त योगिनी दक्षिण दिशा में भ्रमण करती है ।। ३ ।।

चतुर्थी और द्वादशी को सप्तम अर्द्ध प्रहर में राहुयुक्त योगिनी उत्तर दिशा में स्थित रहती है ।। ४ ।।

पंचमी और त्रयोदशी तिथियों के अष्टम अर्द्ध याम में राहुयुक्त योगिनी नैऋत्य कोण में भ्रमण करती है ।। ५ ।।

षष्ठी और चतुर्दशी तिथियों में राहुयुक्त योगिनी द्वितीयार्द्ध प्रहर में वायव्य कोण में स्थित रहती है ।। ६ ।।

सप्तमीपूर्णिमायां चतुर्थेऽर्धप्रहरे विधुन्तुदेन
साकं योगिनी ऐशान्यां जानीयात् ॥ ७ ॥
अष्टम्यमायां षष्ठेऽर्द्धयामे रुद्राणी
तमोयुक्ता साग्नेय्यामीक्ष्यते ॥ ८ ॥
द्वितीयेऽर्द्धयामे सैंहिकेययुता
इति राहुयुक्ता योगिनी[1] उपग्राह्या ॥ ९ ॥ ( ३४ )

## ततोव्यूहादिभिर्युद्धकथनम्

ये राजपुत्राः सामन्ता आप्ताः सेवकजातयः ।
तान् सर्वानात्मनः पार्श्वे रक्षायै स्थापयेन्नृपः ॥ ३५ ॥
परस्परानुरक्ता ये योधा शार्ङ्गधनुर्धराः ।
युद्धज्ञास्तुरगारूढास्ते जयन्ति रणे रिपुन् ॥ ३६ ॥
एकः कापुरुषो दीर्णो[2] दारयेन्महतीश्चनुम् ।

सप्तमी और पूर्णिमा तिथियों में चतुर्थ अर्द्ध प्रहर में राहुयुक्त योगिनी ईशान कोण में रहती है ॥ ७ ॥

अष्टमी और अमावास्या तिथियों में षष्ठार्द्ध प्रहर में राहुयुक्त योगिनी आग्नेय कोण में स्थित रहती है ॥ ८ ॥

इस तरह राहुयुक्त योगिनी भ्रमण वृतान्त भी ग्रहण करना चाहिये ॥ ९ ॥ ( ३४ )

### व्यूह आदि युद्ध वर्णन

राजा को चाहिये कि वह अपनी रक्षा के लिए राजपुत्रों, सामन्तों; विश्वस्त सेवकों को अपने समीप ( अगल-बगल ) स्थापित करे ॥ ३५ ॥

जो परस्पर अनुरागी, युद्ध कला मर्मज्ञ, अश्वारोही होते हैं वे युद्ध में शत्रुओं को जीतते हैं । राजा ऐसे योद्धाओं को अपनी सेवा में रखे ॥ ३६ ॥

एक कायर और भयग्रस्त सेनानायक अपनी विशाल वाहिनी को भी

---

१. योगिनी पृष्ठ और बाम भाग में शुभ होती है ।
पृष्ठे च शुभदा प्रोक्ता वामे चैव विशेषतः ।
योगिनी सा भवेन्नित्यं प्रमाणे शुभदा नृणाम् ॥

२. दीर्णः भीतः । इति मेदिनी ।
एको दीर्णो दारयति सेनां सुमहतीमपि ।
तां दीर्णामनुदीर्यन्ते योधाः शूरतरा अपि । महाभारत ६।३।७९

तद्दीर्णमनु दीर्य्यन्ते योधाः शूरतमा अपि ॥ ३७ ॥
अतो वै कातरं राजा बलेनैव नियोजयेत् ।
द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ ॥ ३८ ॥

परिव्राड्योगयुक्तश्च रणे चाभिमुखोहतः ।
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ॥ ३९ ॥
अक्षयं लभते लोकं यदि क्लीवं न भाषते ॥ ४० ॥

मूर्छितं नैव विकलं नाशस्त्रं नान्ययोधिनम् ।
पलायमानं शरणं गतश्चैव न हिंसयेत् ॥ ४१ ॥

भीरुः पलायमानोऽपि नान्वेष्टव्यो बलीयसा ।
कदाचिच्छूरतां याति शरणे कृतनिश्चयः ।
संभृत्य महतीं सेनां चतुरङ्गां महीपतिः ॥ ४२ ॥

व्यूहयित्वाग्रतः शूरान् स्थापयेज्जयलिप्सया ।
पृष्ठेन वायवो वान्ति पृष्ठे भानुवयांसि च ॥ ४३ ॥

---

हरवा देता है। उस तितर-बितर हुई वाहिनी को बड़े-बड़े शूर योद्धा भी फिर नियन्त्रित नहीं कर पाते हैं ॥ ३७ ॥

अतः राजा को चाहिये कि वह कायर सेनापति को सेना में नियुक्त न करे। युद्ध क्षेत्र में वीरतापूर्वक बढ़ते हुए प्राण त्याग करने वाले योद्धा और योगयुक्त सन्यासी सूर्य मंडल को भेद कर सीधे स्वर्ग लोक में जाते हैं। शत्रुओं से घिर जाने पर दीन वाणी न बोलकर लड़ते हुए शूर लोग वीरगति को प्राप्त होते हैं तो वे अक्षय लोक में सादर स्थान पाते हैं ॥ ३८-४० ॥

रण क्षेत्र में मूर्छित (बेहोश), विकलाङ्ग, अस्त्र-शस्त्र रहित, अन्य योद्धा के साथ युद्धरत, भागने वाले और शरणागत योद्धाओं का बध न करना चाहिये ॥ ४१ ॥

बलवान् योद्धा को चाहिये कि वह डरे हुए (डरपोक) और भागने वाले सैनिक की खोज न करे और न उनका बध करे। शरणागत सैनिक को शरण देनी चाहिये। यदि कदाचित् वह युद्ध करने की इच्छा करे तो उसकी व्यवस्था करनी चाहिये ॥ ४२ ॥

युद्ध क्षेत्र में विजय की इच्छा रखने वाले राजा को चाहिये कि वह विशाल चतुरंगिनी (हाथी, घोड़ा, पैदल, रथ) सेना को सम्मिलित कर

अनुप्लवते मेघाश्च यस्य तस्य रणे जयः।
अपूर्णेनैव मर्त्तव्यं सम्पूर्णेनैव जीवनम् ॥ ४४ ॥
तस्माद्धैर्य्यं विधायैव हन्तव्या परवाहिनी।
जिते लक्ष्मी मृते स्वर्गः कीर्त्तिश्च धरणीतले ॥ ४५ ॥
तस्माद्धैर्यं विधायैव हन्तव्या परवाहिनी।
अधर्म्मः क्षत्रियस्यैषः यद् व्याधि मरणं गृहे।
यदाजौ निधनं याति सोऽस्य धर्म्मः सनातनः ॥ ४६ ॥

अथ व्यूहानाह

युवास्वरे मध्यसेना युद्धं कुर्य्यादतन्द्रिता।
द्वे सेने पार्श्वयोश्चैका पृष्ठतो रक्षयेत् सदा ॥
एकां विकटसेनान्तु दूरस्थां भ्रामयेद् युधि ॥ ४७ ॥
दण्डव्यूहश्च शकटो वराहो मकरस्तथा।
सूचीव्यूहोऽथ गरुडः पद्मव्यूहादयो मताः ॥ ४८ ॥

---

युद्ध व्यूह बना कर सबसे आगे चारों ओर साहसी शूरों को स्थापित करे। जिस राजा के युद्ध काल में पीछे की ओर से वायु प्रवाहित हो, या पीठ की ओर सूर्य देव रहें अथवा कौए उड़ रहे हों अथवा मेघ गरज रहे हों उसकी विजय होती है ॥ ४३-४४ ॥

योद्धाओं को शत्रु सेना को हराये बिना मारना नहीं चाहिये। सम्पूर्ण शत्रु सेना के विनाश करने में ही अपना जीवन समझना चाहिये। जीतने पर लक्ष्मी, मरने पर स्वर्ग और पृथ्वी पर (इस लोक में) कीर्ति प्राप्त होती है। इसलिए धैर्य धारण कर शत्रु सेना का बध करना चाहिये। रोगग्रस्त हो कर घर में मरना यह क्षत्रिय का धर्म नहीं (अधर्म) है। क्षत्रिय जो युद्ध क्षेत्र में लड़ कर वीर गति (मरण) को प्राप्त होता है, यह उसका सनातन धर्म है ॥ ४४-४६ ॥

### व्यूह वर्णन

युवा स्वर युक्त मध्य सेना को आलस्य रहित होकर युद्ध करना चाहिये। दोनों पार्श्व में एक एक पार्श्वसेना रहे। उनके पीछे के भाग में एक पृष्ठ-सेना हो जो कि सदा रक्षा करे। एक विकट सेना युद्ध क्षेत्र में अपनी ओर दूर पर स्थित रहे जो केवल भ्रमण करती रहे ॥ ४७ ॥

दण्ड व्यूह, शकट व्यूह, बराह व्यूह, मकर व्यूह सूची व्यूह, गरुड़ व्यूह, पद्म व्यूह आदि व्यूह होते हैं ॥ ४८ ॥

एतान् व्यूहान् परिव्यूह्य सेनापतिर्वसेत् सदा।
बलाध्यक्षादिकान् सर्वान् सर्वदिक्षु नियोजयेत् ॥

### ततो दण्डव्यूहः

सर्वतोभये दण्ड-व्यूह-रचनाकार्या ॥ ४९ ॥

### पृष्ठतो भये शकटव्यूहम्

पश्चाद्देशे भये समुत्पन्ने शकटाकारेण व्यूहं रचयेत्।
पार्श्वभये वराहव्यूहो गरुडव्यूहो वा विधेयः ॥ ५० ॥
दक्षिणवामपार्श्वयोर्भये उपस्थिते
वराहव्यूहो गरुडव्यूहो वा कार्य्यः ॥

### अग्रतोभये पिपीलिकाव्यूहम्

सन्मुखे शत्रुभये जाते पिपीलिका पंक्तिरूपः
व्यूहविन्यासः कार्य्यः।
स्वल्पा युद्धं कुर्यात् बह्वी सेना च सर्वतो
भ्रमेत्, सम भूमौ चाश्ववारा युद्धं कुर्य्युः।
जले करि तुम्बी दृतिं नौकाभिर्युद्धं विधेयम्।

---

इन व्यूहों को जान-समझ कर सेनापति युद्ध के लिए उचित व्यूहों का निर्माण कर के बलाध्यक्ष आदि सबको सब दिशाओं में नियोजित करे और स्वयं सदा उपस्थित रहे ॥ ४६ ॥

### दण्ड व्यूह

चारों ओर से भय होने पर दण्ड व्यूह की रचना करनी चाहिये ॥ ५० ॥

### शकट व्यूह

पीछे की ओर से भय होने पर शकट व्यूह की रचना करनी चाहिये। पार्श्व ( किसी एक बगल ) से भय होने पर गरुड व्यूह रचे। दक्षिण और बाम दोनों पार्श्व से भय उपस्थित होने पर वराह व्यूह या गरुड़ व्यूह करना चाहिये ॥

### पिपीलिका व्यूह

सामने की ओर से शत्रु भय होने पर पिपीलिका ( चींटी ) की पंक्ति के समान व्यूह करना चाहिये।

छोटी या कम सेना युद्ध करे। विशाल सेना चारों ओर भ्रमण करे। समतल भूमि पर घुड़सवार युद्ध करें। जल में हाथी, तुम्बी, मसक और

पदातयो भुशुण्डीं गृहीत्वा वा धनूंषिचादाय
वने वृक्षेष्वन्तर्धाना वाऽऽरूढा भूत्वा युद्ध्यत।
स्थले चर्मखड्गभल्लैर्युद्ध्यत। युद्धाहङ्कारिण
स्तुङ्गा अग्रे स्थाप्याः अन्ये पश्चात्॥ ५१॥

## अथ सेनानयः

तत्रादौ व्याकरणशिक्षां वक्ष्यामो राज्ञे।
नृपतिर्लोटलकारस्य कुर्य्यात् कण्ठस्थितानि च।
रूपाणि कार्यसिद्ध्यर्थं ह्याज्ञैषा मम गाधिज!
मध्यमपुरुषस्यैव प्रयोगान्यो विचिन्तयेत्॥ ५२॥
सेनानीः प्रतिदिनं सम्यङ् न केनापि स हन्यते।
मध्ममपुरुषोद्भूताः प्रयोगाः सर्वसिद्धिदाः।
तैरेव साधयेद्राज्ञां पुरुषा राजभृत्यकाः॥ ५३॥

## पदातिक्रमः

समोच्चा द्विपदा ग्राह्या ह्रसमाना कदाचन।

---

नौका द्वारा युद्ध करना चाहिये। पैदल सेना बन्दूक लेकर अथवा धनुष-बाण लेकर वन या वृक्ष की आड़ में छिप कर या वृक्ष पर चढ़ कर युद्ध करे।

स्थल प्रदेश में ढाल, तलवार और भाला, बरछी आदि द्वारा युद्ध करना चाहिये। युद्ध प्रेमियों साहसी योद्धाओं को आगे रखना चाहिये। अन्यान्य सेना को उनके पीछे रखना चाहिये ।। ५१ ।।

### सैन्य शिक्षा के नियम

सैन्य शिक्षा के पहले राजा के लिए व्याकरण शिक्षा कहता हूँ। हे विश्वामित्र ! राजा को चाहिये कि वह धातुओं के लोट् लकार के रूपों को कार्य सिद्धि के लिए याद ( कंठस्थ ) करें। यह मेरी ( महादेव जी की ) आज्ञा है। मध्यम पुरुष के ही रूपों का उनके प्रयोगों सहित जो भलीभांति प्रतिदिन चिन्तन करे ऐसा सेनानी किसी के द्वारा मारा नहीं जा सकता। मध्यम पुरुष से उत्पन्न प्रयोग सब सिद्धियों को देने वाले हैं। अतः राज-पुरुषों को चाहिये कि वे उनको कण्ठस्थ करें और उनके द्वारा युद्ध में विजय-लाभ प्राप्त करें ।। ५२-५३ ।।

### पदातिक्रम

पैदल सेना के सैनिक समान ऊंचे हों। ऊंचे नीचे न हों। कूदने और

कूर्द्दने धावने ये वै समास्ते कार्य्यसाधकाः ॥ ५४ ॥
पश्चाद् गमनं स्थिरीकरणं शयनं धावनं तथा ।
चलनं परसेनायां पार्श्वदिक्षु च कारयेत् ॥ ५५ ॥
षष्ठ स्थाने ग्रहा येषां क्रूराः पापाः पतन्ति हि ।
ते युद्धे युद्धयतां वीरा नान्ये कार्यकरा यतः
व, भ, ध, ड, छ, क वर्णा ह्यादिमायां प्रकल्प्य
तदनु हि अच वर्णा आदिकाः सर्वलेख्याः
उपरिगतभवांस्तान् स्थाप्य सर्वान् क्रमेण
भवति च युवयस्या युद्धयतां सा प्रसेना ॥ ५६ ॥

उदाहरणम्

यथा–विवस्वान्, भरतः, धन्धमारः, डित्थः, छत्रपतिः, कुक्षिः
अस्या वस्त्राणि पीतानि ध्वजापीता च तद्वति ।
युद्धयूपस्तथा पीतश्चतुरस्राङ्कसंयुतः ॥ ५७ ॥

---

दौड़ने में जो सम ( एक समान ) सैनिक होते हैं वे ही कार्यसाधक होते हैं ॥ ५४ ॥

इन लोगों को पश्चात् गमन, स्थिरीकरण, शयन, धावन तथा शत्रु सेना में पार्श्व दिशाओं द्वारा प्रवेश आदि कराना चाहिये ॥ ५५ ॥

जिनके छठें स्थान में क्रूरग्रह रवि और मंगल तथा पापग्रह शनि, राहु और केतु होते हैं वे वीर लोग युद्ध क्षेत्र में युद्ध करते हैं। अन्य योद्धा युद्ध कार्य में योग्य नहीं होते हैं। अथवा व, भ, ध, ड, छ, क ये सब अक्षर पहले सेना में लिख कर इसके पश्चात् अच् ( स्वर ) वर्ण आकारादि सब लिखना चाहिये। उसके ऊपर व्यञ्जन और स्वर वर्ण आदि क्रम से रखने से जिस सेना का युवा स्वर होता, है वह सेना अग्रगामी होकर युद्ध करे ॥ ५६ ॥

उदाहरण

जैसे-विवस्वान, भरत, धन्धमार, डित्य, छत्रपति, कुक्षि आदि अक्षर युक्त नामधारी, योद्धाओं की प्रथम सेना युवा स्वर में युद्ध करे तो निश्चय ही विजय प्राप्त होती है। इस सेना का वस्त्र पीले रंग का और ध्वज पीले रंग का, युद्ध का यूप भी पीले रंग का होता है, वह पीला ध्वज और चतुष्कोण चिह्न-युक्त युद्ध यूप ( स्तम्भ ) जिस स्थान पर गाड़ कर युद्ध किया जाय वहीं पर सेना युद्ध में टिकी रहती है अर्थात् पराजित न हो कर अटूट रहती है ॥ ५७ ॥

श्वेतरक्तहरितकृष्णाश्वान्या सेना हित्वादिवत् ।
कर्त्तव्यापार्थिवैर्नित्यं जयलाभसुखेच्छुभिः ॥ ५८ ॥
ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्य्यौ यथाक्रमम् ।
अधीशाः पञ्चसेनानां विज्ञेयाः शृणु गाधिज ! ॥ ५९ ॥
ब्रह्मा रुद्रबले जीयाद्विष्णुश्चन्द्रबले जयेत् ।
रुद्रः सूर्यबलं प्राप्य चन्द्रो ब्रह्मबलं युधि ।
सूर्यो विष्णुबलं लब्ध्वा जयेच्चैव न संशयः ॥ ६० ॥
अ ब्रह्मा विष्णुरिरुद्र उश्चन्द्रत्वे च भास्करः ।
ओ ज्ञेयो पार्थिवैर्नित्यं अस्त्रशास्त्रविचक्षणैः ॥ ६१ ॥
प्राप्य स्वं स्वं बलं सेना पूर्वोक्ता युद्धगा यदि ।
क्षणार्द्धेनारीन् सर्वान् मारयन्तीति रुद्रवाक् ॥ ६२ ॥

## अथाश्वक्रमः

मण्डलं चतुरस्रञ्च गोमूत्रञ्चार्द्धचन्द्रकम् ।

---

पहली सेना को छोड़ कर अन्य पांच प्रकार की सेना विजयेच्छु राजाओं द्वारा की जानी चाहिये । उनमें श्वेत, रक्त, हरित और कृष्ण इन चार रंगों वाली तथा एक साधारण रंग वाली, इस प्रकार कुल पांच प्रकार की सेनाएँ हों ॥ ५८ ॥

हे विश्वामित्र ! ब्रह्मा, विष्णु, रुद्र, चन्द्र और सूर्य क्रमशः उन पाँच सेनाओं के अधिपति जानना चाहिये ॥ ५९ ॥

ब्रह्मा रुद्र बल से जीतते हैं । विष्णु चन्द्र के बल से जीतते हैं । शिव सूर्य का बल पा कर और चन्द्रमा ब्रह्म बल पा कर एवं सूर्य विष्णु बल पा कर युद्ध में विजयी होते हैं । इसमें सन्देह नहीं ॥ ६० ॥

( अ ) ब्रह्मा ( इ ) विष्णु ( ऊ ) रुद्र ( ए ) चन्द्र ( ओ ) सूर्य इन सब को अस्त्र-शस्त्र विद्या में विलक्षण राजाओं को जानना चाहिये ॥ ६१ ॥

पूर्वोक्त नियम के अनुसार सेनाएँ अपनी अपनी क्षमता प्राप्त करके यदि रण क्षेत्र में युद्ध करने जायें तो अर्ध क्षण में शत्रु सेना को मार डालती हैं । यह भगवान् रुद्र का बचन है ॥ ६२ ॥

### अश्वक्रम

गोलाकार, चतुष्कोण, गोमूत्राकार, अर्द्धचन्द्राकार, नागपाश इन यंत्र

नागपाशक्रमेणैव भ्रामयेत् कटपञ्चकम् ॥ ६३ ॥

## अथ हस्तिक्रमः

गजानां पर्वतारोहणम्, जलगमनम, धावनम्, उत्थानम्, उपवेशनम्, अलातचक्रादिभिर्भीतिनिवारणम् कार्य्यम् ॥

## रथक्रमः

रथाश्वसाधनन्तु, समादिस्थले विधेयम् ॥

## अथ सेनापतिकरणविधिं वक्ष्यामः

श्रृणु भो राजर्षे विश्वामित्र ! आकारविद्याबलयुक्तं क्षत्रियसेनापतिं विदध्यात् । तस्यैते नियमाः समस्तवाहिनीं एकदृष्ट्यावलोकयेत् । अन्यत् सर्वान् पदातीन् परिश्रमसदृशमधिकारं दद्यात् । व्यूहरचनायामतिनिपुणाश्च भवेत् स एव सेनानीर्विधेयः । इति ।

---

क्रम द्वारा ( प्रणाली से ) घोड़ों को युद्ध की शिक्षा देनी चाहिये ( जिससे वे युद्ध क्षेत्र में अटक न सकें ) ॥ ६३ ॥

### हस्तिक्रम

हाथियों को पर्वत पर चढ़ना, जल में प्रवेश करना, दौड़ना, उठना, बैठना तथा अलात चक्र ( उल्मुक ) आदि के द्वारा भय दूर करने की शिक्षा देनी चाहिये ॥

### रथक्रम

रथ आदि के द्वारा घोड़ों को समतल भूमि में चलने की शिक्षा देनी चाहिये ॥

### सेनापति के चयन की विधि

हे राजर्षि विश्वामित्र ! सुनो। शरीर के आकार, विद्या और बल-युक्त क्षत्रिय को सेनापति नियुक्त करना चाहिये। सेनापति का यह कर्त्तव्य है कि वह समस्त सेना को समदृष्टि से देखे ( किसी के साथ पक्षपात न करे )। अन्यान्य पैदल सेना को परिश्रम के अनुसार अधिकार देना चाहिसे। जो व्यूह रचना में अतिनिपुण हो उसको ही सेनानी बनाना चाहिये ॥

## अथ शिक्षा

तत्रादौ षठनपाठनविधिं ब्रूमः । आदौ क्षात्रकोश-व्याकरणसूत्राण्यध्येतव्यानि, द्वावध्यायौ सप्तमाष्टमौमनोर्मिताक्षराव्यवहाराध्यायश्च जयार्णव-विष्णुयामलविजयाख्यस्वरशास्त्राण्यपराणि च पठितव्यानि ततः सरहस्यं धनुर्वेदमापठेत् ॥

## हन्तव्याहन्तव्योपदेशः

सुप्तं प्रसुप्तमुन्मत्तं ह्यकच्छं शस्त्रवर्जितम् ।
बालं स्त्रियं दीनवाक्यं धावन्तं नैव घातयेत् ॥ ६४ ॥
धर्मार्थं यः त्यजेत् प्राणान् किं तीर्थे च जपे च किम् ।
मुक्तिभागी भवेत् सोऽपि निरयं नाधिगच्छति ॥६५॥

---

## शिक्षा

सर्वप्रथम पठन पाठन विधि को बताते हैं । सर्वप्रथम क्षात्र कोश ( समर शास्त्र का कोश ) और व्याकरण सूत्रों को अध्ययन करना चाहिये । मनु संहिता का सातवां और आठवां अध्याय, याज्ञवल्क्य स्मृति पर मिताक्षरा टीका व्यवहार अध्याय, युद्धजयार्णव, विष्णुयामल, विजयाख्य तंत्र, स्वर शास्त्र तथा अन्य आवश्यक ग्रन्थों को पढ़ना चाहिये । उसके बाद रहस्य सहित धनुर्वेद को ( गुरु के मुख से ) अध्ययन एवं तदनुसार अभ्यास करना चाहिये ॥

## मारने न मारने के सम्बन्ध में उपदेश

जो सोया हुआ हो, गाढ़ निद्रा में हो, जो नशे में पागल हो और अधोवस्त्र खुल गये हों, जो निरस्त्र-शस्त्र हो, जो बालक हो, स्त्री हो, जो दीन बाणी बोल रहा हो या रण स्थल से भाग रहा हो, उसको नहीं मारना चाहिये ॥ ६४ ॥

जो व्यक्ति धर्मार्थ ( युद्ध क्षेत्र में अथवा अन्य किसी कार्य में ) अपना प्राण त्याग करे उसके तीर्थ जाने और जप आदि करने की आवश्यकता नहीं है । वह तो सीधे मुक्ति ( मोक्ष ) पाता है । वह नरक नहीं जाता ॥ ६५ ॥

ब्राह्मणार्थे गवार्थे वा स्त्रीणां बालवधेषु च ।
प्राणत्यागपरो यस्तु स वै मोक्षमवाप्नुयात् ॥ ९९ ॥

इति श्रीमहर्षिवशिष्ठप्रणीता ( वाशिष्ठी ) धनुर्वेदसंहिता ॥

---

जो ब्राह्मण, गाय, स्त्री और बालक का प्राण बचाने के लिए अपना प्राण त्याग देता है वह मोक्ष प्राप्त करता है ॥

श्रीमहर्षि वशिष्ठ प्रणीत धनुर्वेदसंहिता समाप्त ।

# कठिन शब्दों के अर्थ

फल–बाण के अग्रभाग में लगा हुआ लोहे का शल्य।

शार्ङ्ग–सींग का बना हुआ धनुष।

प्रमाण–नाप।

मानुष धनुष–मनुष्य के धारण करने योग्य धनुष।

यौगिक धनुष–प्रारंभ में अभ्यास करने योग्य धनुष।

युद्ध चाप–युद्ध करने योग्य धनुष।

पर्व–पोर, गाँठ

बाह्याभ्यन्तरहस्तकम्–ऐसा धनुष जिसके खींचते समय हाथ बाहर हो जाय या भीतर ही रह जाय।

गलग्रन्थि–गले में गाँठ

तलग्रन्थि–नीचे भाग में गाँठ

गुणहीन–जिस डोरी में कुछ दोष हो जैसे, पतली, कमजोर, छोटी आदि।

गुणाक्रान्त–धनुष का भार डोरी से अधिक हो।

पट्टसूत्र–रेशम।

पुंख–बाण में लगने वाले पंख जो पिछले भाग में लगते हैं।

लेप–पक्का पानी चढ़ाना।

नाराच–लोहे का बना बाण।

नालीक–गोली।

स्थान–पैतरा ।

गुणमुष्टि–धनुष की डोरी को मुट्ठी बाँध कर पकड़ने की विधि ।

शीघ्रसंधान–फुर्ती से बाण चलाना ।

श्रमक्रिया–अभ्यास ।

धनुर्मुष्टि–मुट्ठी से धनुष पकड़ने की विधि ।

# प्राविधिकपदानां भेदादिवर्णनम्

गुणमुष्टिः
—काकतुण्डी
—पताका
—मत्सरी
—वज्रमुष्टिः
—सिंहकर्णः

गुणतत्त्वानि
—तत्कालहतछागतन्तुः
—पक्ववंशत्वचः
—पत्रसूत्रगुणः
—महिषीस्नायुः
—हरिणीस्नायुः
चापम्
—युद्धचापम्
—यौगिकम्
चापप्रमाणम्
—अर्द्धपञ्चहस्तम् ( दिव्यम् )
—चतुर्हस्तम् ( मानुषम् )
—नववितस्तिमितम् (केषाञ्चिन्मते)
दृढचतुष्कम्
—अयः
—घटः
—चर्म
—मृत्पिण्डः
धनुर्द्रव्यम्
—काष्ठम्
—लोहम्
—श्रृङ्गम्

धनुर्वेदस्यपादाः
—दीक्षा
—प्रयोगविषयः
—संग्रहः
—सिद्धप्रयोगः
फलम्
—अर्द्धचन्द्रकम्
—आरामुखम्
—कर्णिकम्
—काकतुण्डम्
—क्षुरप्रम्
—गोपुच्छकम्
—द्विभल्लकम्
—भल्लम्
—वत्सदन्तम्
—सूचीमुखम्
गुरुः
—आचार्यः
—गणकः
—भार्गवः
—योधः

वेधारम्भः —
- पुष्पवेधः
- मत्स्यवेधः
- मांसवेधः

व्यायाः
—कैशिकः
—भरतः
—वत्सकर्णः
—सात्विकः
—स्कन्धः
व्यूहक्रमाः
—अश्वः
—पदातिः
—रथः
—हस्तिः
व्यूहानि
—गरुडव्यूहम्
—दण्डव्यूहम्
—पद्मव्यूहम्
—पिपीलिकाव्यूहम्
—मकरव्यूहम्
—वराहव्यूहम्
—शकटव्यूहम्
—सूचीव्यूहम्
शरगतयः
—भ्रमरी
—मीनपुच्छा
—सूचीमुखा

शरप्रकारः
—स्त्रीः
—पुमान्
—नपुंसकः
शुभचापलक्षणम्
—त्रिपर्वं
—नवपर्वं
—पञ्चपर्वं
—सप्तपर्वं
स्थानानि
—असमपादम्
—आलीढम्
—गरुड़क्रमम्
—दर्दुरस्थानम्
—पद्मासनम्
—प्रत्यालीढम्
—विशाखम्
—समपादम्

प्रथमारम्भव्यूहः श्लोकः ४८ पृष्ठं ५५

दण्डव्यूहः पृष्ठं ५६

पृष्ठतोभये शकटव्यूहम् श्लोकः ५० पृष्ठं ५६

राजा

पार्श्वमयेवराहव्यूहः श्लोकः ५० पृष्ठं ५६

गरुडव्यूहः श्लोकः ५० पृष्ठं ५६ सूचीव्यूहः पृष्ठं ५५

मकरव्यूहः श्लोकः ४८ पृष्ठं ५५

मकरव्यूहः

पिपीलिकाव्यूहम् पृष्ठं ५६

सेनाशयनव्यूहः श्लोकः ५५ पृष्ठं ५८

## अनुक्रमणिका

